नतु तदन्य ब्रह्मशिवादिदेवतारूपमिति स्थिरपुरुषार्थप्रेप्सुभिर्नारायणरूपमेव पर ब्रह्मोपास्य प्रयत्नत्य च ।—p 89) From the foregoing analysis and statement of arguments advanced by the disputants Śri Appayya Dīkshita and Śrī Vijayīndratīrtha one can judge their relevancy and adequacy to meet each other's position It becomes abundantly clear by a study of the examination of the authorities and the rules of interpretation and textual criticism of Mīmāmsā, presented in *Para tatva Prakāsika* that the Thesis of Pseudo-Vaidikas like Shrī Appayya Dīkshita rests on flimsy ground and Śri Vijayīndratīrtha's pledge to prove the supremacy of Vishnu the pivot of Madhva Siddhānta has been vindicated and fulfilled, with unprecedented success

The greatest merit of Shri Vijayindratirtha's work lies in his all-comprehensive analysis of minute details in the Upanishads, Smritis, Puranas and Āgamas and proving by cross references to word and sense in their texts the homogenuity of their purport according to the accredited rules of semantics in the Mīmāmsā Sāstra This is perfectly a logical and impersonal approach which appeals to and brings home to even the most sceptic critic, the correctness of the conclusions thus arrived at by the author

All students of logic and philosophy are deeply indebted to the great saint philosopher Śri Vijayīndratīrtha for his exemplary performance and guidance in solving the riddles of philosophy We offer our most reverential homage to the saint by presenting this short appreciation at his feet

"DODDAMANE"
Nanjangud
16 3-1972

"*Saraswathikanthabharanam*"
"*Vidya Vachaspathi*"
—*Raja S Gururajacharya*

*Vidyaratnam*
—*R S Panchamukhi*

॥ श्रीलक्ष्मीवेङ्कटेश्वरः प्रसन्नोभूयात् ॥

विद्याऽऽत्मनिभिदाबोधः

# श्रीपरिमलसंशोधनप्रकाशनमन्दिरोदन्तः

श्रीमदानन्दतीर्थीयसच्छास्त्रामृतवर्षकः ।
श्रीमत्परिमलोनाम भाति प्रकटनालयः ॥

अहो महदिदं प्रमोदस्थानं नः यच्छ्रीमत्पूर्णप्रमतिदेशिकसार्वभौमदर्शितशास्त्रसरणीप्रपन्नानांप्राचीनाचार्याणां वेद-वेदान्त-मीमांसा-काव्य-नाटकालङ्कारादिप्रबन्ध-प्रवरसङ्ग्रह-संरक्षण-संशोधन-सम्पादन-प्रकाशनादिमहत्कार्यं सयशोघोषं निर्वहतोऽस्य श्रीपरिमलसंशोधन-प्रकाशनमन्दिरस्य रजतमहोत्सवः, श्रीराघवेन्द्रगुरुसार्वभौमत्रिशतमानोत्सवेन सममिदानीमस्माभिस्ससंभ्रमं परमपूज्यश्रीमत्सुयमीन्द्रतीर्थ-श्रीपादहृत्सरोजविराजमानमन्त्रालयमुनीन्द्राणामनुग्रहबलेन समनुष्ठीयत इति ।

मङ्गलकरप्रसङ्गेऽस्मिन् श्रीपरिमलप्रकाशनमन्दिरस्यात्मोदन्तं किञ्चिद्विबुधवरेषुविज्ञापयितुमभिलषामः ।

विदितचरमेवेदं यद्भारतदेशीयतत्त्वशास्त्र-न्याय-मीमांसा-व्याकरण-काव्य-नाटकालङ्कार-धर्म-संस्कृतिविषये प्रवृत्तानि ग्रन्थरत्नान्यपरमितानि प्रकाशन्त इति । परं भारतीयानामस्माकंपरमदौर्भाग्यतया वा कालमाहिम्ना वा आहोस्विदस्मदौदासीन्येन वा तादृशेऽनन्तसाहित्य-सागरेऽपरिमितग्रन्थरत्ननिचयः खिलः लुप्तश्चत्येतदतीवदुःखावहम् । तेन हि समग्रदेशस्य महतीहानिरापतितेत्ययं विषयः नातिशयस्य परां कोटिमारोहते । अत एव प्रणष्टावशिष्टानामपूर्वानर्घग्रन्थरत्नानां सङ्ग्रहाय संरक्षणाय च नैके पण्डितप्रकाण्डास्सारस्वतपरिषदश्च दिवानक्तमप्यासक्तास्सततं प्रयतमानावरीवृतति इत्यहो प्रमोदस्थानमेतत् ।

आस्माकीनाः श्रीमदानन्दतीर्थभगवत्पादीयसन्मतानुयायिनः परमहंसकुलशेखराः वैराग्यवैयात्यसुवात्त्वभूषणाः प्रातःस्मरणीयाः

श्रीपद्मनाभ-नरहरि-जयराज-विबुधेन्द्र-श्रीपादराज-व्यासराज-रघूत्तम-विजयीन्द्र-वादिराज-सुधीन्द्र-राघवेन्द्र-योगीन्द्र-सुमतीन्द्र-वादीन्द्र-वसुधेन्द्र-वरदेन्द्र-धीरेन्द्र-भुवनेन्द्र-व्यासतत्त्वज्ञ-सुजनेन्द्र-सुज्ञानेन्द्र-तीर्थप्रमुखाः महीयांसः षड्दर्शनाचार्याः, तदनुग्रहभाजः शताधिकाः गृहस्थाश्रमिणश्च सहस्राधिकान्यनितरसाधारणानि द्वैततत्त्वप्रतिपादनपराणि, न्याय-मीमांसा-व्याकरण-धर्म-काव्य-नाटकालङ्कारशास्त्र-स्तोत्रप्रबन्धरत्नान्यरीरचन्। एवमपूर्वाणां तादृशप्रबन्धप्रवराणां व्यवस्थितविधानेन संरक्षणकरणेऽस्मदीयजनताया महोदासीनतया साम्प्रतं नैकेग्रन्थाः नामावशेषिता बभूवुः ।

जगद्गुरुश्रीमन्मध्वाचार्यमुख्यसंस्थानाधीश नञ्जनगूडु श्रीराघवेन्द्रस्वामिमठीयदिग्विजयविद्यासिंहासनाधीश्वराः प्रातःस्मरणीयाः श्रीमत्सुयमीन्द्रतीर्थश्रीमच्चरणाः विषयमिमं विज्ञाय सम्यक्समालोच्य प्राचीनाचार्यविरचितग्रन्थानां सङ्ग्रहसंरक्षण-संशोधन-प्रकाशनोद्देशेन सुसंस्थामेकामुद्घाटयितुं क्रिस्ताब्दीयपञ्चचत्वारिंशदुत्तरैकोनविंशतितमे वत्सरे (1945 A. D.) सदयमस्मानादिशन् ।

विदितचरमेव तत्र भवतां भवतां यद्गुरुवराणामाज्ञानुसारेण वयं "श्रीपरिमलसंशोधनप्रकाशनमन्दिरम्" इति प्रथितामिमां संस्थां तस्मिन्नेव हि वत्सरे वैशाखशुक्लचतुर्दशीशुभदिने श्रीनृसिंहजयन्तीसमलङ्कृतमङ्गलमुहूर्ते उद्घाटयाम इति ।

तदारभ्य वयमनेकान् देशान् सञ्चर्य बहुदेहश्रमेण धनव्ययेन च तत्र तत्र विद्यमानविद्वत्स्वामिकमहोदयगृहस्थान् सम्प्रार्थ्य तेभ्यः नैकग्रन्थान् सम्पाद्य समगृह्णिम । साम्प्रतं वयं सहस्राधिकान् ग्रन्थान्, तथापि अप्रकाशितानपूर्वान् शताधिकान् हस्तलिखित-तालपत्रात्मकान् ग्रन्थान् समगृण्हीम इत्यमुं विषयं विबुधवरेभ्यः वाचकमहोदयेभ्यो निवेदयितुमतिमात्रं मोदामहे ।

## प्रकाशनमन्दिरस्योद्देशाः

१) प्राचीनग्रन्थानां सङ्ग्रहः, २) तेषां संरक्षणम् । ३) संशोधनम् । ४) सम्यक् सम्पाद्य मुद्राप्य प्रकाशनम् । ५) संस्कृत-

भाषामयानां ग्रन्थानां आपण्डितपामरोपयोगाय कर्णाटकाङ्ग्लादि देशीयभाषास्वनुवादकरणं प्रकाशनञ्च। ६) सुरभारती-कर्णाटक-भाषा-हरिदाससाहित्यप्रसारः। ७) पण्डितप्रकाण्डान् तत्र तत्र संप्रेष्य तदुपन्यासद्वारा द्वैततत्त्व-धर्म-संस्कृति-श्रीगुरुसार्वभौममहिमप्रसार-करणम्। ८) तदर्थं "परिमल" मासपत्रिकाप्रकटनम् इत्याद्यनेकेऽस्मत्प्रकाशनमन्दिरस्योद्देशाः।

एतावन्तं कालमस्माभिः श्रीदोड्डबल्लापुरं वासुदेवाचार्य-दुर्गं भीमाचार्य-आचार्य वेङ्कोबाचार्यप्रमुख पण्डितोत्तमानां सहायसम्पदा संशोधनपूर्वकमधोनिर्दिष्टग्रन्थाः प्रकटीकृताः।

१. श्रीसुयतीन्द्रविजयकाव्यम्।
२. दृष्टान्तशतकम्।
३. ब्रह्मसूत्रन्यायसङ्ग्रहः।
४. श्रीमध्वतत्त्ववादः। (Madhva's Tattva Vada)
५. प्रातःसङ्कल्पगद्यम्।
६. द्वैतवेदान्तः।
७ शैवसर्वस्वखण्डनम्।
८. भेदविद्याविलासः।
९ नारदीयदीक्षा।
१०. सनातनधर्मप्रदीपः।
११. श्रीगुरुचरितम्।
१२. श्रीहरिगुरुस्तवराजः।
१३. श्रीहरिगुरुकीर्तनताराहारः।
१४. श्रीकमलेशकीर्तनमञ्जरी।
१५ उपसंहारविजयः।
१६. सत्तत्त्वरत्नावलिः। (Sri Suyamindra Tirtha Commemoration Volume)
१७. श्रीरामचारित्रमञ्जरी।
१८. श्रीराघवेन्द्रविजयमहाकाव्यम्।
१९. श्रीराघवेन्द्रस्वामिनः। (कर्णाटकभाषायां)

२०. दैत्यबालकप्रह्लादः ( कर्णाटभाषायां )।
२१. शैवसर्वस्वखण्डनम् ( द्वितीय मुद्रणम् )।
२२. जगद्गुरुश्रीराघवेन्द्रस्वामिनः ( हिन्दीभाषायां )।
२३ „ ( The Great Saint of South India )।
२४ „ ( कर्णाटभाषायां–द्वितीयमुद्रणम् )।
२५. प्रमेयनवमालिका ( अणुमध्व–विजयः व्याख्या समलंकृतः )।
२६. मन्त्रालयप्रभुः ( कर्णाटकभाषायां )।
२७ कर्णाटकदेशीयहरिदासाः ( कर्णाटकभाषायां )।
२८. तीर्थप्रबन्धः ( कर्णाटव्याख्यासंवलितः )।
२९. महाभारत–मन्थनम् ( कर्णाटभाषायां )।
३०. सनत्सुजातीयम् ( „ )।
३१. परिमलार्थपट्टाभिषेकः ( „ )।
३२. श्रीगुरुगुणस्तवनम् ( कर्णाटभाषाव्याख्यासंवलितम् )।
३३. श्रीधीरेन्द्राष्टकम् ।
३४. श्रीविष्णुसहस्रनामस्तोत्रम् ।
३५ अजय्य–विजयीन्द्रः ( कर्णाटभाषायां )।
३६. श्रीहरिगुरुस्तवराजः ( द्वितीयमुद्रणम् )।

किञ्च तत्त्व–धर्म–संस्कृति–श्रीगुरुसार्वभौममहिम्नां प्रसारणाय अस्मदीयश्रीपरिमलसंशोधनप्रकाशनमन्दिरद्वारा "परिमल" इत्यभिधां शुभं कर्णाटकभाषामयीं सांस्कृतिकमासपत्रिकामपि प्राक्तनैकोनविंशतिवर्षाण्यारभ्य प्रकटयन्त एव वर्तामहे इति विषयोऽपि विदित एव सर्वेषां विदुषाम् ।

आर्थिकसाहाय्यरहिता अपि वयमेतावत्पर्यन्तं कथमपि प्राचीनग्रन्थ–परिमलमासपत्रिकाप्रकाशनादिकमाचरन्तः श्रीहरिवायु – सुरसरस्वती–गुरुसार्वभौमसेवां, विबुधवरशुश्रूषाञ्च निर्वहन्तः वर्तामहे।

श्रीमद्राघवेन्द्रतीर्थपूज्यपादानां तथा श्रीमत्सुयमीन्द्रतीर्थगुरुवराणामनुग्रहबलेन वयामिदानीं श्रीगुरुसार्वभौमत्रिशतमानोत्सव–परिमल

प्रकाशनमन्दिररजतमहोत्सव शुभप्रसङ्गे पूर्वोक्तोभयोत्सवसंस्मरणार्थं श्रीमत्सर्वज्ञाचार्यमहासंस्थानाधीशनन्नगूडु —— श्रीमद्राघवेन्द्रगुरुवर्य दिग्विजयविद्यासिंहासनेऽधुनाविराजमानानां निरुपमविद्यौदार्यगुणरूप-धानामस्मत्कुलगुरूणां परमपूज्यानां श्रीमत्सुजयीन्द्रतीर्थश्रीपादानामा-ज्ञानुसारेण तदाशीर्वादबलेन, श्रीगुरुसार्वभौमभक्तानां धर्माभिमानिनां धनसहायेन च, अधोनिर्दिष्टान् ग्रन्थान् मुद्राप्य प्रकटीकृत्य श्रीमद्भ्यो विद्वद्वरेभ्यः गुरुभक्तवरेभ्यश्च प्रदातुं सन्तोतुष्यामहे ।

## त्रिशतमानोत्सव–रजतोत्सवप्रकाशनम्

१. परतत्त्वप्रकाशिका–श्रीविजयीन्द्रतीर्थपूज्यपादविरचिता ।

२. श्रीकृष्णचारित्रमञ्जरी–श्रीराघवेन्द्रतीर्थविरचिता (श्रीलक्ष्मी-नारायणाचार्यविरचितव्याख्या समलङ्कृता)।

३. श्रीरामचारित्रमञ्जरी — ,, द्वितीयमुद्रणम्) कर्णाटकभाषानुवाद संवलिता—विद्यावैभवश्रीराजा एस्. गुरुराजाचार्यविरचिता)।

४. काठकोपनिषत्खण्डार्थः — श्रीराघवेन्द्रतीर्थविरचितः ।

५. प्रमेयसङ्ग्रहः — ,,

६. तत्त्वसंख्यानम्–टीका–श्रीविजयीन्द्र–राघवेन्द्रगुरुवर्यटिप्पणी-द्वयसमलङ्कृतम्)।

७. श्रीमन्न्यायसुधापरिमलप्रसरः (अद्वैततत्त्वसुधाविमर्शः) दि. विद्यारत्नं आचार्यवेङ्कोबाचार्यविरचितः)।

८. श्रीकृष्णचारित्रमञ्जरीविवरणम् (कर्णाटकभाषानुवादः — विदुषा राजाश्रीगुरुराजाचार्येणविरचितः)।

९. काठकोपनिषत्सारः —विदुषा श्रीसाणूरु भीमभट्टेनविरचितः (श्रीराघवेन्द्रगुरुवर्यखण्डार्थानुसारिकर्णाटकभाषानुवादः)।

१०. तत्त्वसंख्यानम्— (टीकाटिप्पणीद्वयस्य च कर्णाटकभाषानु-वादः —विदुषा रित्थभिजनवेङ्कणाचार्येणविरचितः)।

११. भारतदेशीयसंस्कृतिपरिचयः ( कर्णाटभाषायां )
–विद्यारत्न श्रीराघवेंद्राचार्यपञ्चमुखी महोदय विरचितः )।

१२ श्रीमन्न्यायसुधा— ( Sri Nyaya Sudha )।

१३. जगद्गुरु श्रीराघवेन्द्रस्वामिनः ( कर्णाटकभाषायां )।

१४. " " ( हिन्दीभाषायां )।

१५. " ( आङ्ग्ल भाषायां )

१६. परिमल मासपत्रिका विशेषसञ्चिका।
( कर्णाटकाङ्ग्ल हिन्दी-संस्कृतभाषामयी )

वयमिदानीमुपर्युक्तग्रन्थप्रकाशनविषये–मातृकाप्रदान–संशोधन–सम्पादन – मुद्रण – शुद्धप्रतिकृतिकरण – मुद्रिताक्षरशोधन–समीकरण–कर्णाटकाङ्ग्लहिन्दीभाषानुवादकरण–कर्णाटकाङ्ग्ल प्रस्तावनादिलेखन–प्रदान–ग्रन्थमुद्रणोपयोगिपत्रप्रदान–धनप्रदानादिभिरस्माकं साहाय्यमाचरितवद्भ्यः श्रीमद्भ्यः पं॥ राजा. एस गेणुगोपालाचार्य, पं॥ राजा एस. लक्ष्मीनारायणाचार्य, पं॥ रा. जयरामाचार्य, चि. हुलि. वे. पवमानाचार्य, पं॥ प्रो॥ के. श्रीनिवासाचार्य, पं॥ प्रो॥ के. टि. पाण्डुरङ्गी, पं॥ आर्. एस. पञ्चमुखी, पं॥ रित्ति वेंकण्णाचार्य, पं. श्री हावेरी श्रीनिवासाचार्य, पं॥ रित्ति कृष्णाचार्य, श्री एच् वि. पद्मनाभाचार्य, डा॥ वि. एन्. कृष्णमूर्तिशर्मा, पं॥ प्रो॥ एस्. वि. भीमभट्ट, पं॥ एस्. के. वेङ्कटरमणाचार्य, पं॥ पि. पि. लक्ष्मीनारायण उपाध्याय, श्री. कौजलगी ( Sri Brindavan Printers & Publishers ) श्री एच्. वेङ्कोबराय ( Chitra Printry ) श्री पि. ए उपाध्याय महोदय ( Press ) श्री श्रीनिवासशास्त्री ( Mysore Hindi Mahila Seva Samithi Press ) श्री वि. एस्. वैद्यनाथ येयर ( Manager Sri Parimala Press ) श्री सि एल्. नारायण ( Vani Press ) श्री कृष्णगुण्डाचार्य, श्री एच्. वि. कृष्णाचार्य, श्री राजा जि. सुधीन्द्रकुमार, श्री ए. भुजङ्गराय ( Sri Parimala Prakasha Press ) श्री एस्. ए. गजनगङ्ग, श्री पि. वि. जयतीर्थाचार्य, श्री पि. वि. गुरुराज, श्री पि. वि. श्रीनिवास,

श्री एम्. कृष्ण, श्री ए. वि. नागराज, श्री रिंचि वेंडाचार्य, श्री आर्. के. गिरिराज, श्री के. कृष्णाचार्य, श्री आर्. डि. श्रीपादाचार्य, श्री एच्. वि. शास्त्री ( Mysore Paper Mills Ltd. Bangalore ) महोदयेभ्यः आस्माकीनान् अनेकान् धन्यवादान् सामोदं समर्पयामः।

अस्मद्गुरुवर्यश्रीमत्सुयमीन्द्रतीर्थगुर्वन्तर्गतश्रीमद्राघवेन्द्रगुरुसार्वभौमाः तथा श्रीमध्वाचार्यान्तर्गतः भगवान् श्रीलक्ष्मीवेङ्कटेश्वरः ग्रन्थप्रकाशने साहाय्यमाचरितवद्भ्यः श्रीमद्भ्यः आयुरारोग्यैश्वर्यसत्सन्तानादिसन्मङ्गलान्यनुगृण्हन्त्विति सभक्तिप्रकर्षं संप्रार्थ्य विरमामः।

सर्वेजनाः सुखिनो भवन्तु
समस्तसन्मङ्गलानिभवन्तु
स्वस्ति पन्थामनुचरेम

विरोधिकृत् सं।
श्रावणकृष्णद्वितीया
भानुवासरः
नञ्जनगूडु
८-८-१९७१

इति विद्वज्जनवशंवदः
प्रकाशकः
श्रीपरिमल संशोधन प्रकाशन
मन्दिरम्

॥ श्रीः ॥

॥ विद्याऽऽत्मनिभिदाबोधः ॥

# उपोद्धातः

समुद्यत्स्वालोकक्षणरचितवाचंयमवधू-
शिलाभावाभावस्फुटविदितसंसिद्धमहिमा ।
महीकन्याकान्तः करकलितकोदण्डविशिखः
अभीरामोरामश्श्रियमपरिमेयां दिशतु नः ॥

श्रीमदानन्दतीर्थेन्दुभासनं मम मानसे ।
आशासे साधुशब्दार्थसरिदीशाभिवृद्धये ॥

श्रीमतो राघवेन्द्रस्य नमामि पदपङ्कजे ।
कामितादोषकल्याणकलनाकल्पपादपौ ॥

राघवेन्द्रकुमाराय विद्वत्कुमुदबन्धवे ।
लक्ष्मीनारायणार्याय नतयस्सन्तु मामिकाः ॥

सुखतीर्थमताब्धीन्दुं सुधीन्द्रसुतसेवकम् ।
सुधापरिमलासक्तं सुयमीन्द्रगुरुं भजे ॥

आपादमौलिपर्यन्तं गुरूणामाकृतिं स्मरेत् ।
तेन विघ्नाः प्रणश्यन्ति सिध्यन्ति च मनोरथाः ॥

महदिदं प्रमोदस्थानं नः यच्छ्रीमत्परिमलाचार्यापरनामविभूषितानां श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां त्रिशतमानोत्सवस्य, श्रीपरिमल संशोधनप्रकाशनमन्दिररजतोत्सवस्य च शुभप्रसङ्गे श्रीमन्त्रालयस्वामिपादविरचिताः १) श्रीकृष्णचारित्रमञ्जरी २) श्रीरामचारित्रमञ्जरी ३) काठकोपनिषत्खण्डार्थः ४) प्रमेयसंग्रहः ५) तत्त्वसंख्यानटीका-टिप्पण्यादिप्रबन्धप्रवराः संस्कृत – कर्णाटकोभयव्याख्यासंवलिताः प्रकाशनपथमधिरोहन्तीति ।

"माहात्म्यज्ञानपूर्वस्तु सुदृढस्सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तः तया मुक्तिर्नचान्यथा ।" इति श्रीभगवत्पादीयवाक्यानु-

सारेण श्रीहरिवायुगुरुभक्तिजननाय, गुरुभक्तिमन्तरा हरिभक्त्यनुदया
त्तदर्थं गुरुभक्तिजननायैहिकामुष्मिकफलप्रदानपटीयसां श्रीराघवेन्द्रगुरु-
वराणां महिमातिशयनिरूपणपरं पुरावृत्तमत्र किञ्चिन्निरूप्यते ॥

कृतयुगे सत्यलोके श्रीचतुराननसेवातत्परः शङ्कुकर्णाख्यः कर्मज-
देवः श्रीपवमानस्य विशेषावेशयुक्तः भगवत्सङ्कल्पमनुसृत्य लोककल्या-
णार्थं ब्रह्मशापादसुरकुले प्रह्लादनाम्ना अवततार। दानवधूवंहतनूभवः
मातृगर्भस्थ एव श्रीनारदमुन्युपदेशाद्विदितनिखिलहरितत्त्वः रहिता-
सुरभावः आजन्मवैष्णवः जितेन्द्रियः कृष्णग्रहगृहीतात्मा स महात्मा
प्रह्लादराजः हरिभजनपरायणः स्वान्तप्रशान्तसात्त्विकशक्त्या विष्णु-
भक्त्या प्रत्यक्षीकृतश्रीनृकण्ठीरवः "अहं तवात्मदानेच्छुः त्वन्तु
भृत्यत्वमिच्छसि" इति नरहरिणा प्रशंसितस्तदनु भगवता "भवन्ति
पूज्या लोके मद्भक्तास्त्वामनुव्रता" इत्यनितरसाधारणवरं सम्पाद्य
जगति नितरां कीर्तिमलभत ॥

स एव प्रह्लादराजः बाह्लीक-व्यासराज-रूपेणावतीर्य श्रीयादव-
कुलशेखरं श्रीकृष्णं संसेवयामास। पुनरपि श्रीचतुराननकरकमल-
परिपूजितचतुर्युगमूर्तेः श्रीमूलरामचन्द्रप्रभोः पूजां, अध्यात्मतत्त्व-
धर्मप्रसारणं — द्वैतसिद्धान्तस्थापन — ग्रन्थरचनं — आपण्डितपामर-
जनोद्धरणं — जगत्कल्याणादिकं च चिकीर्षुः, देवदेवस्य श्रीरमाजाने-
स्सङ्कल्पमनुसृत्य श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमरूपेण स्वीकृता-
चरमावतारः श्रीमन्मन्त्रालये विराजत इति श्रीनृसिंहपुराणवचनेन *

---

* "शङ्कुकर्णाख्यदेवस्तु ब्रह्मशापाच्च भूतले ।
प्रह्लाद इति विख्यातः भूभारक्षपणे रतः ॥
स एव राघवेन्द्राख्ययतिरूपेण सर्वदा ।
कलौ युगे रामसेवां कुर्वन्मन्त्रालयेऽभवत् ॥ "

—श्रीनृसिंहपुराणम्

अपरोक्षज्ञानिनां हरिदासवराणां पदपद्यसुलादिवचनैश्चा*वगम्यते ॥

प्रातःस्मरणीयोऽयं श्रीराघवेन्द्रयतिवरः ज्ञानप्रसारकृते कृतावतारस्य श्रीहंसनामकपरमात्मनः परमपावनसदन्ववाये राराज्यमानानां बळित्थादिमन्त्रवर्णैरनुवर्णनीयाना*मपर्णाधवशर्वेन्द्रपूर्वैरपि संस्तूय-

---

* i) "ಪ್ರಹ್ಲಾದದೇವನೇ ವ್ಯಾಸಮುನಿ ರಾಘವೇಂದ್ರರು ।
ಅಹುದೆಂದು ಭಜಿಸಿರೋ ವಿಜಯವಿಠಲನ ॥"

—ಶ್ರೀ ವಿಜಯದಾಸರು.

ii) "ಪ್ರಥಮ ಪ್ರಹ್ಲಾದ ವ್ಯಾಸಮುನಿಯೇ । ಯತಿರಾಘವೇಂದ್ರ ॥"

—ಶ್ರೀ ಗೋಪಾಲದಾಸರು.

iii) "ಶ್ರೀ ರಾಘವೇಂದ್ರ ಬಾರೋ ॥
ವ್ಯಾಸರಾಯನೆನಿಸಿ ನೃಪನ । ಕ್ಲೇಶಕಳೆದವನೆ ಬಾರೋ ॥"

—ಶ್ರೀ ಜಗನ್ನಾಥದಾಸರು.

iv) ತುಂಗಾತೀರದಿ ನಿಂತ ಸುಯತಿವರನ್ಯಾರೆ ಪೇಳಮ್ಮಯ್ಯ ॥
ಖೂಳಹಿರಣ್ಯಕನಲ್ಲಿ ಜನಿಸಿದ ಪ್ರಹ್ಲಾದನುತಾನಿಲ್ಲಿಹನಮ್ಮ ॥"

—ಅಭಿನವಜನಾರ್ದನವಿಠಲರು.

v) "ಕೋಣಿನಕಂಡಿರ್ಯಾ । ಸುಪ್ರಹ್ಲಾದನಕಂಡಿರ್ಯಾ ॥
ಬಾಲಪ್ರಹ್ಲಾದನಾಗಿ । ಖೂಳಕಶ್ಯಪುವಿಗೆ । ಲೋಲಶ್ರೀನರಹರಿಯ ।
ಕಾಲರೂಪವತೋರ್ದ । ವ್ಯಾಸಾರ್ಜಿತಗ್ರಂಥ......ಮೆರೆವ ವ್ಯಾಸಮುನಿಯ ॥
ಮಂತ್ರಗೃಹದಲಿನಿಂತ ಸು । ಯತಿವರ್ಯ ॥"

—ಮದ್ವೇಶವಿಠಲರು.

* a) "इदन्ते पात्रं सनवित्तमिन्द्र पिबासोममेनाशतक्रतो ।
पूर्ण आहावोमदिरस्य मध्वो यं विश्व इदभिहर्यन्ति देवा ॥

—ऋग्वेद अ. ८

b) "मध्वो वो नाम मारुतं यजत्राः" —मरुत्सूक्तम्

c) "विष्णोः पदे परमे मध्व उत्सः।" —श्रुतिः

d) "तृतीयमस्य वृषभस्य दोहसे
दशप्रमतिं जनयन्त योषणः ॥"

—बळित्थासूक्तम्

मानानां श्रीमत्पावनपवमानावताराणां श्रीमदानन्दतीर्थभगवत्पादाचार्याणां वेदान्तसाम्राज्यविद्यासिंहासने क्रिस्ताब्दीय १६२१ वर्षमारभ्य १६७१ वर्षपर्यन्त पञ्चाशद्वर्षकालं व्यराजत ।

यतिशेखरोऽयं भव्याः अपूर्वसुबोधव्याख्यारचनेन वैदिकवाङ्मयमलञ्चकार । चतुःशास्त्रेष्वनितरसाधारणप्रबन्धप्रवरप्रणयनेन पण्डितप्रवरेषु कृपाञ्चकार । अत एव जगन्मान्योऽयं श्रीमत्पूर्णप्रमतिप्रणीतसमग्रभाष्याणां श्रीमज्जयमुनिरचितनिखिल टीकानां निपुणतरटिप्पणीरचनकौशलेन निष्कण्टकं द्वैतसिद्धान्तमाचन्द्रतारकं संस्थाप्य "टिप्पण्याचार्य" इति विबुधवरैरस्तूयत ।

अयञ्च महात्मा विरिञ्चप्रपञ्चरक्षित कविसञ्चयसन्देहपरिच्छेदाय श्रुतिस्मृति ब्रह्मसूत्रजातस्य प्रेक्षावदभिमतार्थप्रकाशनाय च "मन्त्रार्थमञ्जरी-तन्त्रदीपिका-न्यायमुक्तावलि-प्रमेयसङ्ग्रह - भाट्टसङ्ग्रह - पञ्चसूक्तविवरणा"दि स्वतन्त्रग्रन्थरत्नानि विरचय्य "सर्वतन्त्रस्वतन्त्र" इति नैजबिरुदमन्वर्थमकार्षीत् । यतिपुङ्गवोऽसावष्टाचत्वारिंशत्ग्रन्थान्प्रणीय सुरसारस्वतभाण्डागारं समवर्धयत् । अनेन मुनिवरोऽय विबुधप्रपञ्चे अजरामरकीर्तिमलभत ।

"उभयवंशाब्धिचन्द्रमा" इति प्रथितयशाः श्रीमद्वादीन्द्रतीर्थश्रीमच्चरणः श्रीमन्त्रालयस्वामिपादविरचितग्रन्थानां, तद्विशिष्यानां,, श्रीपरिमलाचार्याणामसदृशमहिम्नः दैविकगुणानाममरचरितस्य च निरूपणकृते "श्रीगुरुगुणस्तवन"मिति प्रथित ग्रन्थरत्नमेव व्यरीरचत् । ग्रन्थेऽस्मिन्नाध्यात्म-काव्य-स्तोत्रीयांशाः चकासति ।

यद्यपि श्रीराघवेन्द्रमुनीन्द्रस्य चरितादिकं विदितमेव सर्वेषां विदुषाम् । तथापि सम्प्रदायमनुसृत्यात्र गुरुसार्वभौमस्य कालदेशादिकमधिकृत्य सूक्ष्मतया किञ्चिन्निरूपयितुमिष्यते ॥

॥ श्रीः ॥

## श्रीगुरुवराणामन्ववायः

विदितचरमेवेदं यत्परमपुण्यतमेऽस्मिन्भारतवर्षे सुविख्यातः पाट्टिक-वंशः[1] चतुर्दशानिरवद्यविद्यानां मातृस्थानमिति। तदेकदेशसदन्ववाये "वीणमुद्रे"[2] इतिप्रथिते प्रकृतकृतिनायकः श्रीराघवेन्द्रगुरुसार्वभौमः अवततार। अस्य गुरुवरस्य प्राञ्चः (पूर्वजाः) पाट्टिककुलसञ्जाताः कदम्ब-राष्ट्रकूट-देवगिरि-विजयनगर प्रमुखसाम्राज्येषु सचिव-सेनानी-दण्डनायक — अर्थसचिव — महास्थानविद्वत्प्रमुखमहोन्नतपदाधिरूढाः साम्राज्यहितचिन्तन-संवर्धन-तत्त्व-धर्म-संस्कृति-विद्याप्रसारणादिकं निर्वहन्तः प्रथितयशसः अभूवन्।

अखण्डभूमण्डलमण्डनायमाने पण्डितप्रकाण्डमण्डिते कर्णाटक-साम्राज्ये विजयनगरीयराजस्थाने पावनपाट्टिककुलशेखरः गौतमगोत्रीयः न्यायवेदान्तशास्त्रपारावारपारीणः गान्धर्वकलास्वपिपारङ्गतः वीणा कृष्णाचार्य इति सुगृहीतनामा भूसुरवरः व्यराजत। सः स्ववंश-बन्धुभिः विजयनगरीयसंस्कृतविश्वविद्यानिलयकुलपतिभिः जग-न्मान्यैः श्रीव्यासराजगुरुसार्वभौमैरादृतः चक्रेश्वरेण मानितः विबुध-मण्डलीलाल्यमानः अमलां कीर्तिमलभत। कर्णाटकरमारमणः श्रीकृष्ण-देवरायः अस्मात् गन्धर्वकलामधीत्य स्वगुरुमेनं विशेषतः सममानयत्।[3]

वीणा कृष्णाचार्यस्य कनकाचलाचार्यनामकः पुत्र आस। तस्य तिम्मणाचार्याभिधः पुत्र आसीत्। स एव महात्मा श्रीराघवेन्द्रयति-राजस्य पूर्वाश्रमीयः तातपादः।

---

1. अरवत्तुवक्कलु वंशः।
2. अर्थसचिव अथवा राजधनागाराध्यक्ष कर्णाटकभाषायां वीणमुद्राधिकारी इति व्यवहरन्ति।
3. "उपदिश्य स कृष्ण भूवराले निजगान्धर्वकलां कलामगृह्णात्।
   धनमौक्तिकगुच्छहारपूर्वां बिरुदालीं गुरुदक्षिणापदेशात्॥"
   —श्रीराघवेन्द्रविजयमहाकाव्यम्।

श्रीतिम्मण्णाचार्यः न केवलं न्यायवेदान्तादिशास्त्रेषु, अपि तु वीणावादनेऽपि स्वपितामह इव निष्णातः व्यराजत। तस्य धर्मपत्नी गोपिकाम्बा द्वितीयपदाधिरूढापि नैजमहुगैरद्वितीया सर्वजनमहिता व्यलसत्। अनयोः श्रीवेङ्कटेश्वरानुग्रहबलेन वेङ्कटाम्बा इति दुहिता गुरुराज इति पुत्रश्च अजायेताम्।

श्रीतिम्मण्णाचार्यस्य अगाधवैदुष्यादिकं समवलोक्य प्रमुदितमनाः कर्णाटकचक्रेश्वरः "विद्यादीप" गौरवेण तमाचार्यं सममानयत्।[1] श्रीमन्मध्वाचार्यपीठाधीशः मानसपूजाधुरन्धरः श्रीमत्सुरेन्द्रतीर्थश्रीमच्चरणोऽपि स्वपूर्वाश्रमबन्धवे पाण्डित्यकुलभूषणाय अस्मै कर्णाटभूरमणीधवेन श्रीरङ्गराजेन[2] प्रदत्ते ग्रामवरे वृत्तिमेकां अकल्पयदिति श्रीरङ्गराजताम्रशासनादवगम्यते।[3] क्रिस्ताब्दीय 1565 तमे वत्सरे "रक्षसतंगडि"[4] महाक्रन्दने विजयनगरपतनानन्तरं निराश्रितैरनेकैर्विबुधवरैस्समं कथंकारं तिम्मण्णाचार्योऽयं विद्यानगरान्निर्गत्य तञ्जापुरं समागत्य तद्राजास्थाने चव्वप्पनायकभूपालेन सम्मानितः तदाश्रयेऽवर्तत। तदनु निजबन्धूनां कुलगुरूणां श्रीमत्सुरेन्द्र-विजयीन्द्रतीर्थानामाज्ञानुसारेण कुम्भकोणं समागत्य श्रीमठ एव सगौरवं न्यवसत्।

एवं व्यतीते बहुकाले कुलदीपकं श्रेष्ठगुणमण्डितं पुत्रमेकं पुनरपि प्राप्तुकामः श्रीतिम्मण्णाचार्यः स्वपत्न्या गोपिकाम्बिकया वेङ्कटशैलमासाद्य देवदेवं श्रीनिवासं क्षीरव्रतादितपसा सभक्तिश्रद्धमसेवत।

---

1. " अभजन् नृपतेर्दिनप्रदीप द्युतविष्वक् प्रबलप्रतापरश्मिम्।
   दिनमण्यनुवर्तितस्य शान्त्यै स्वसमानेतरवाक्तमिस्ररोः ॥
   —श्रीराघवेन्द्रविजयः।
2. Srirangaraja II (1572-1586 A. D)
3. (a) " .........वृत्तिमन्तोऽत्र लिख्यन्ते......।
   याजुषो गौतमगोत्रो वीणे तिम्मप्पयोऽपि च ॥ "
   (b) Copper Plate-21(1575 A D.) Mys. Arch Report-1944.
4. क्रन्दनमेतत् " ताळेकोटिक्दन "मिति कतिपये ऐतिहासिकविमर्शनपटवः वदन्ति।

तेन प्रसन्नो भगवान् श्रीवेङ्कटेश्वरः स्वप्ने "जगन्मान्यमसाधारणं पुत्रं प्रदास्ये" इति संस्तूय सकरुणं वरमदात्।

श्रीशालिवाहनशके १५१८ तमे श्रीमन्मथसंवत्सरे फाल्गुण शुक्ल सप्तम्यां गुरुवासरे (1598 A.D.) मृगशीर्षनक्षत्रे श्रीगोपिकाम्बा श्रीनिवासदेववरप्रसादेन सर्वलक्षणसम्पन्नं पुत्रं ऐन्द्री पूर्णचन्द्रमिव प्रासोष्ट।[1] अहो लोककल्याणकातरः भागवताग्रेसरः प्रह्लादरविः पुनरुदैत्!

आनन्दाम्बुधिनिमग्नः तिम्मण्णाचार्यः वैदिकविधिमनुसृत्य जातकर्म-नामकरणादिमहोत्सवं निर्वर्त्य श्रीवेङ्कटेशानुग्रहसञ्जातः निजसुतोऽयं वेङ्कटशैलमिव इव लोकविख्यातः सर्वजनवन्दनीयपादारविन्दश्च भूयादिति सुतं वेङ्कटनाथनामानमकार्षीत्[2]। स एव बालकः अस्मत्कथानायकः श्रीराघवेन्द्रगुरुसार्वभौमः। वेङ्कटनाथः शरच्चन्द्र इव बन्धुकुमुदामोदी अवर्धत॥

तिम्मण्णाचार्यः श्रीशके १५२० तमे हेमलम्बसंवत्सरे (1601 A D.) स्वसुतस्य चौलाक्षराभ्यासादिमहोत्सवं न्यवर्तयत्। तदानीमेव वेङ्कटनाथप्रदर्शितामद्भुतप्रतिभां[3] समवलोक्य सज्जनाः "अहो शिशुरयं देवांशसम्भूत" इति प्रशशंसुः।[4]

---

1. "असविष्टसुत द्विजेन्द्रपत्नी शुभलग्ने परिपूर्णदृष्टिभाजि।
अखिलद्विजराजवन्दनीय द्विजराज दिगिनामधिपस्य॥"
—श्रीराघवेन्द्रविजय, ३–४२

2. "उदयाम्बरटीहेमपृथ्वीधरपर्यन्तधरावरेऽवनीधे।
अभिवन्द्य इतीव बालकस्य व्यतनोद्वेङ्कटनाथनाम तातः॥"
—श्री. रा. वि. ३–४८

3. "विलिख्य भूमौ प्रथम कुमार रेखामिमामोमिति सम्पठेति।
– पित्रा नियुक्तः पुनरब्रवीच्चमस्ये कथ सा गुणपूर्णसञ्ज्ञा॥"
—श्री. रा वि. ३–४४

4. "अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी।
विश्रुत नरजानं च त विद्यादेरसत्तमम्॥"

महामहिम्नः पुत्रस्य मङ्गलाभ्युदयावलोकनजातसन्तोषानुभवभाग्यहीनौ पितरौ स्वर्गतौ। पितृसुखवञ्चितः वेङ्कटनाथः समाश्रिताग्रजः श्रीगुरुराजाचार्यस्य लालनपोषणादिभिरवर्धत। नचिरात् एव वेङ्कटनाथः नानालिपिकोषकाव्यादिकमधिजगे।

श्रीशके १५२५ तमे शुभकृत्संवत्सरे वैशाखमासे ( 1605–1606 A D ) वेङ्कटनाथः अग्रजेनैव उपनीतः ब्रह्मोपदेशमलभत। तदनु गुरुराजाचार्यः मधुरानगरवास्तव्यस्य राजास्थानविदुषः स्वभगिनीपतेः श्रीलक्ष्मीनृसिंहाचार्यस्य निकटं विद्याभ्यासाय कुमारं वेङ्कटनाथं प्राहिणोत्। सोऽपि कुमारः तस्मिन्नेव हि श्रीकृष्णः सान्दीपिन्याचार्ये इव साङ्गान्वेदान् काव्यनाटकालङ्कारादिसाहित्यं न्यायवेदान्तमीमांसाव्याकरणादिशास्त्राणि च सम्यगधीत्य बाल्य एव निरतिशयवैदुष्यमवाप ॥[1]

तारुण्यपदमधिरूढमनुजं वेङ्कटनाथं गुरुराजाचार्यः सत्कुलप्रसूतया सद्गुणमण्डिततया सङ्गीत-साहित्यकलावत्या सरस्वतीनाम्न्या कन्यया सह श्रीशके १५३७ तमे आनन्दनामसंवत्सरे ( 1616-1617 A. D.) सानन्दमुद्वाहयत्। श्री वेङ्कटनाथाचार्योऽयमद्वितीयोऽपि सरस्वतीद्वितीयः कतिपयकालं कावेरीपत्तने सुखमुवास। कालक्रमेण आचार्यवर्यः सरस्वत्यां कुलदीपकं पुत्रमलभत। तं कुमारं लक्ष्मीनारायणाभिधानेनालञ्चकार।

## दारिद्र्यानुभवः

वेङ्कटनाथसुधीमणिरयं नैजपाण्डित्य-प्रतिभादिषु समारूढमेरुशिखरोऽप्यसह्यदारिद्र्यानुभवप्रसङ्गमापेदे।

अत्र किञ्चिद्विचिन्त्यते॥ विबुधवरोऽयं शङ्कुकर्णाख्यमूलरूपः। सत्यलोके चतुराननसेवानिरतस्यास्य दारिद्र्यानुभवावकाश एव नासीत्।

---

1. उपाददत्त कुतुकेन शेमुषीनिधिः स लक्ष्मीनरसिंहदेशिकम्।
   तपोधिसान्दीपिनिभूसुरोत्तमं यथा यशोदातनयस्त्रयीमयम्॥

—श्री रा. विजयः ४–९

तदनु श्रीप्रह्लादबाह्लीकराजावतारसमये अखण्डभूमण्डलसार्वभौमपद-मधिरूढः राजराज इव व्यराजत। तदानीमपि दारिद्र्यनामाप्यमुं नास्पृशत्। अथ कलियुगे स्वीकृतश्रीव्यासराजावतारः कर्णाटक-साम्राज्ये राजगुरुपदभूषितः व्यलसत्। अतोऽप्यस्मिन्नवतारे साम्राज्य-लक्ष्मीः दारिद्र्यलक्ष्मीं दूरतो निस्सार्य गुरुवरममुं समुल्लासयत्। अत एवास्मिन् चरमावतारे दारिद्र्यदेवताया अवश्यं स्थानं दातव्यमिति मनसि निधायाचार्योऽसौ स्वयमेव प्रकाममाकिञ्चन्यमन्वभवदिति सुवचम्।

यतः दारिद्र्यदेवताया याञ्चां सार्थकीकर्तुं दारिद्र्यावस्थायां मानवेन संयमनं न्हातव्यमितिनीतिं स्वनिदर्शनेन बोधयितुं च घोरतरदारिद्र्यं समाह्वयत्। तच्च श्रीहरिचित्तमिति मन्वानः ससन्तोषमन्वभवत्।

आचार्यस्यास्य दारिद्र्यपरमावधिं श्रीराघवेन्द्रविजयकारः एभि-श्श्लोकैर्हृदयङ्गमतयाऽवर्णयत्—

"अब्दस्यैकं वत्स्यतो नास्य नव्यं स्थूलं वस्त्रं
सन्ततञ्चाल्पमौल्यम्।
नव्यं वस्त्रं नैव सूक्ष्मं कदाऽपि क्षौमे तस्मिन् का
कथा किञ्चनस्य ॥१९॥

तैलाभ्यङ्गं वत्सरस्यैकवारं नैतस्यास्ति प्राज्यमाज्यं
कथं स्यात्।
अग्निष्टोमे नाधिकारी कथं स्याज्ज्योतिष्टोमे जात्य-
संस्थाधिकारी ॥२०॥

काले काले लभ्यते नास्य भुक्तं लब्धं चेत्तद्भुज्यते
हन्त भूमौ।
पात्राभावादेकदा नार्थितेऽपि क्षुद्बाधायाः शान्ति-
मेवालमिष्ट ॥२१॥

छिन्ने वस्त्रे भिन्नपानीयपात्रे जीर्णस्थल्यां दस्युभिर्नीयमाने ।
प्रागाकृष्टं भावि कौपीनमस्य त्यागे यागे प्रागिवाभूत्प्रयाजः ॥ २२ ॥

विष्णोरेको वासगो वर्धमानेऽलोके कृत्तः पञ्चपस्तस्य गेहे ।
इष्टौ पञ्चोदितास्ते प्रयाजाश्चातुर्मास्येष्वेधमाना नवासन् ॥ २३ ॥

एवं चेश्ण्यादराद्धोत्कृचिह्न सन्धार्याय शास्त्रगुरुयाद्ज्ञयम् ॥ ''

एतादृशदुर्धरदारिद्र्यदुःखसन्तप्तहृदयः वेङ्कटनाथाचार्यः अत एव करुणारसार्द्रहृदयः पुरतः स्वीय सर्वेशसिंहासनाधिपत्यसमये, कियत्ना सर्वदापि शरणागतान् कामधेनुरिव, अर्थिजनान् कल्पवृक्ष इव, निष्किञ्चनान् चिन्तामणिरिव कलिकल्मषाकुलितेऽस्मिन् कालावपि सकलान् सफलमनोरथानाकलयन्निवसति मन्त्रालयेति निश्चप्रचम् ॥

न्यायवेदान्त-व्याकरण-मीमांसादिशास्त्रीयोद्ग्रन्थान् धिजित्य निपुवेंङ्कटनाथाचार्यः कुम्भकोणमासाद्य सर्वतन्त्रस्वतन्त्रात्पदवाक्यप्रमाण पारीणान्निजकुलगुरोश्श्रीसुधीन्द्रतीर्थश्रीचरणात् षड्दर्शनीवैदग्ध्यमतुलं लेभे। [1] स्वयञ्च चतुर्दशशास्त्रपाठप्रवचनादिकं निर्वहन् स्वगुरुकरुणावशंवदः कांश्चिद्दिनानैषीत्।[2]

कृतिरचनकुतूहली वेङ्कटनाथाचार्यः आगमकोविदनिगदित मार्गेण श्रीनारायणपण्डिताचार्यप्रणीतस्य "अणुमध्वविजय" काव्यस्य "गूढ-

1. शाब्द भाष्य जयदेवी च टीकां भाट्टतन्त्र भामती गौरव च ।
व्यासार्योक्ता चन्द्रिका वेङ्कटार्यः यद्यद्वेद तत्तदभ्यस्यतिस्म ॥
—श्री रा. विजय, ६–७

2. " प्रातः स्नात्वा साधुवेदान्तभाष्य शाब्द पश्चात्तर्कशास्त्रं ततस्सः ।
पूर्वेतन्त्र चान्वदद्वेङ्कटार्यस्तुर्ये यामे कांश्चिदन्दाननैषीत् ॥ "
—श्री. रा. वि. ६–८

भावप्रकाशिका"भिधां सरलसुन्दरीं व्याख्यामतनोत्। अनेनैव हि व्याख्याप्रणयनेन सुप्रीतः पावनः पावमानिः स्वीयवेदान्तविद्याराज्येऽभ्यषिञ्चत्, तदवलोक्य वीणापाणिरपि स्वीय सारस्वतसिंहासनेऽपि निजधव इव एनमभ्यषिञ्चदिति श्रीवादीन्द्रतीर्थश्रीमच्चरणः "गुरुगुणस्तवने "निपुणतरं सोत्प्रेक्षमुपावर्णयत् ॥[1]

## वाक्यार्थविजयः

अथ कदाचिद्वेङ्कटनाथाचार्ये स्वगुरुश्रीसुधीन्द्रतीर्थ श्रीचरणेनसमं देशेषु सञ्चरतिसति दक्षिणद्वारकेति विख्याते राजमन्नारुगुडिक्षेत्रे देवालयसभामण्डपे अद्वैतयतिभिस्सम वाक्यार्थप्रसङ्गे श्रीवेङ्कटनाथाचार्यः पाणिनिव्याकरणशास्त्रे अनितरसाधारणपाण्डित्यप्रदर्शनपूर्वकं विजयमलभत।[2] अनेन मोदमानमानसः मुनिपुङ्गव श्रीसुधीन्द्रपूज्यपादः स्वशिष्यप्रवरमाचार्यं "महाभाष्याचार्य" इति, महाप्रशस्तिप्रदानेन विद्वत्सभायां निभृतमन्वग्रहीत्।[3]

---

1 "धीरश्रीराघवेन्द्र कृतनिजविजयसद्ग्रहार्थप्रकाश –
दृष्ट्वा सन्तुष्टचेता. दशमतिरचिरादभ्यषिञ्चत्पदे स्वे।
नून वाणी त्वदीयाननलिन गता तत्कृतस्वप्रियेव–
मत्याहृष्टप्रहृष्टा स्वयमपि तदनु स्वेपदे चाभ्यषिञ्चत् ॥"

—श्रीगुरुगुणस्तवनम्–१६

2. "दण्डेनान्यस्ताडित कुण्डलीव प्राभातोर्यद्गुणनस्य रूपम्
शास्त्रन्तस्येत्यर्थवाक्ये स पाण्डत्तस्येत्युक्त्वा वादिन पृच्छतिस्म ॥
एतद्धातो किं यगन्तस्यरूप ब्रूहित्युक्त चिन्तयन्नर्घयामे।
तत्रत्याना दैशिको मायिभिक्षु स्तूष्णीमासीदुत्तरेऽभाषमाने ॥"

—श्री रा. वि ६–१२–१४

3. "दृष्ट्वा सर्वे देशिक श्रीसुधीन्द्र. प्रागज्ञात कौशल शाब्दशास्त्रे ॥
प्राचीनाख्या ता महाभाष्यपूर्वां प्रादादस्मै पश्यतां पण्डितानाम् ॥"

—श्री. रा वि ५–१५

अन्यदा 'महाभाष्याचार्यः' वेङ्कटनाथसुधीमणिः तञ्जापुरराजास्थाने प्रधानसचिवस्य चतुश्शास्त्रकोविदस्य श्रीयज्ञनारायणदीक्षितस्य समक्षं श्रीसुधीन्द्रयतिवराध्यक्ष्ये प्रचलितविद्वत्सभायां "काकतालीय" शब्दमधिकृत्य प्रवृत्ते विषयविचारे तत्समुद्राङ्कनविषये च तत्रत्यान् पण्डितप्रकाण्डान् विजित्य नितान्तमशोभत।[1] विद्यापक्षपातिना दीक्षितवरेण तञ्जापुरीशेन च आचार्योऽयमतीव सम्मानितो रेजे॥

## विद्यालक्ष्मीदर्शनमुपदेशश्च

श्रीसुधीन्द्रयतिशेखरः श्रीसर्वज्ञाचार्यप्रेरणानुसारेण वेङ्कटनाथाचार्यं स्वीयवेदान्तविद्याराज्येऽभिषेक्तुं संकल्प्य तदर्थमाचार्यमेनमयोधयत्। गुरुवचनमाकर्ण्य वेङ्कटनाथाचार्यः—

"क्वाहं न्यासः कुत्र वा वेदविद्यासाम्राज्यं ते क्वापि विद्याद्गमार्य।
पारंसिन्धो र्भारमूढ्या विवेकी गन्तुं यत्नं को जनः सन्तनोति॥

इत्युक्तस्तं प्राह नावोहि यद्वः शान्तिर्दान्तिर्धीरतोदारता च।
केतुस्तासां मत्प्रसादो गरीयान् विद्यन्ते किं दुर्घटं सिन्धुयाने॥

एकान्ते तैर्बोधितः प्रत्यवादीद्बालाभार्यो बालको नोपनीतः।
बालश्चाहं नाथमे मेऽस्ति वाञ्छा निर्बन्धश्चेत्सिर्गमिष्यामि
नूनम्॥"

इत्यादिक्रमेण वराश्रमस्वीकारं नान्वमन्यत।

पुनरपि देशिकमणा बहुप्रकारमुपदिष्टो वेङ्कटनाथाचार्यः गुरूक्तं श्रुत्वाऽशृण्वन्निव स्वगृहं प्रत्यागतः। तत्र तस्मिन् विचारक्रान्ति-

---

1. तञ्जापुर्यामन्यदा शुल्बसूत्रं व्याख्यातारं वावदूकं जयन्तम्।
राज्ञो विद्वान्यज्ञनारायणेज्या धीश्चेतसस्तं ननन्दातिमात्रम्॥
कालेनास्मिन् काकतालीयशब्दे जेतारं तं यायजूकान्कवीन्द्रान्।
तस्यां पुर्यां तत्समुद्राङ्कने च प्रौढं मेने यज्ञनारायणस्तम्॥
— श्री. रा. विजयः ६–१६–१७

स्समजनि। 'स्थास्यामश्चेल्लभ्यते संयमित्वम्। गच्छामश्चेत्तेऽधुना मां शपेरन्। स्थातुं शक्यं नैवगन्तुञ्च शक्यं किं कुर्मः?' इति वेङ्कटनाथाचार्यः चिन्ताक्रान्तो बभूव॥

तस्यामेवरजन्यां पश्चमाचार्यं स्वगुर्वाश्रमं चिन्तयतिसति साक्षाद्विद्यालक्ष्मीः तस्य पुरतः प्रादुरासीत्। स्वदर्शनेनाश्चर्यचकितमाचार्यं संबोध्य वीणापाणिः "अयि विद्वद्वाच। मां विद्यालक्ष्मीं जानीहि। तव गुरौ वत्सरद्वन्द्वमेव मम वासः। तद्ग्रन्थव्याख्याने लब्धवर्णः त्वत्समः विद्वत्सङ्घे नान्योऽस्ति। येन श्रीमूलरामः पूज्यते तस्मिन्नेव मम वासः भगवता वेदव्यासेन कल्पितः। तस्य पूजापि कर्मन्दीन्द्रैरेव कृता। तस्मादहं तेषु नित्यं वसामि। वेङ्कटार्य। निराश्रया त्वय्यहं वासं याचे। परमहंसाश्रमं स्वीकारपूर्वकं मह्यमाश्रयं देहि। शीघ्रं वराश्रमं स्वीकृत्य विद्याराज्यं शाधि" इत्युपदिदेश।[1]

तदनु परमहंसाश्रमस्वीकाराभावे वैष्णवसंप्रदायस्यागामिसङ्कटपरम्परादिकं निरूप्य सुरभारती पुनरप्येवमाचष्टे— "कुमार। गृहस्थाश्रमिणा त्वया क्रियमाणशुश्रूषापेक्षया स्वीकृततुरीयाश्रमेण त्वया निर्वर्त्यमानया सेवया ममातीव हर्षं उदेति। त्वदाश्रये मोदमानाहं क्षणमपि त्वां न त्यजामि। अन्यकर्मन्दिनं स्वप्नेपि न स्मरामि। आवयोश्च परस्पराधीनत्वमपरिहार्यं वैधम्।"[2] इति वेङ्कटनाथाचार्यं

1. जानीहि त्वं वेंकटार्यं त्वदार्ये वासो यन्मे वत्सरद्वंद्वमेव।
तद्व्याख्याने लब्धवर्णो नचास्ति विद्वत्संघे नैवभावी त्वदन्यः॥
श्रीरामार्चा पूज्यते येन तस्मिन्वासो यन्मे कल्पसद्व्यासदेवः।
कर्मन्दीन्द्रैरेव पूजापि क्लृप्ता तस्मात्सोऽहं तेषु नित्यं वसामि॥
तस्मादङ्गीकृत्य कर्मन्दिभावं राजा विद्याराजलक्ष्म्या भव त्वम्।
—श्री. रा. वि. ६-५२-५४

2. नेदानीं मे तादृशसंप्रमोदः पारिव्राज्यं यादृशः प्राप्यते चेत्।
सम्प्राप्ता त्वां नत्यजामि क्षणं वा स्वप्नेवाऽहं न स्मराम्यन्यभिक्षुम्।
विष्यायत्तं ते यतित्वं न शक्यं त्यक्तुं प्राप्तं त्वद्वशत्वं ममापि।
—रा. वि. ६-६४-६५

चराश्रमनिश्चयमतिं विधाय प्रसन्नहृदया स्वीयमन्त्रमस्योपदिश्य क्षणादन्तर्दधौ ॥[1]

सुरभारतीसन्दर्शनजनितसहर्षपुलकोद्गमः आचार्यः समग्रमेनमुदन्तं गुरवे न्यवेदयत्। तदाकर्ण्य हर्षनिर्भरो यतिपुङ्गवः तमाचार्यं धनकनकवस्त्ररूपसम्पद्प्रदाय "ससन्तोषं लक्ष्मीनारायणकुमारं ब्रह्मोपदेशादिना संस्कृत्य तुरीयाश्रमस्वीकाराय सिद्धोभव" इति आदिदेश। वेङ्कटनाथसूरिः स्वकुमारं लक्ष्मीनारायणमुपनयनसंस्कारेण ब्रह्मविद्याधिकारिणं विधाय स्वीयकुटुम्बभरणभारं निजाग्रजे श्री गुरुराजाचार्ये निधाय देशिकसार्वभौमेण साकं तञ्जापुरीमयाय ॥

## परमहंसाश्रमस्वीकारः वेदान्तसाम्राज्याभिषेकश्च

तदनु श्रीमत्सुधीन्द्रतीर्थयोगीन्द्रः स्वशिष्यस्य तञ्जापुरेशितुः रघुनाथभूपालस्यास्थानसभायां राज्ञः विबुधसन्दोहस्य समक्षं श्रीशके १५४३-४४ तमे दुर्मतिनामसंवत्सरे फाल्गुणशुक्लद्वितीयायां (1621–1622 क्रिस्ताब्दे) शुभमुहूर्ते श्रीवेङ्कटनाथाचार्याय परमहंसाश्रममनुजग्राह।[2] ततः श्रीमत्पूर्णप्रमतिविद्यासाम्राज्यसिंहासने तं नूतनयतिशेखरमलंकृत्य स्वस्वप्नसूचितेन "श्रीराघवेन्द्रतीर्थश्रीपादा" भिधानेन-

---

1 इत्युक्त्वा सा मन्त्रमस्योपदिश्य स्वीय देवी पश्यतोऽन्तर्दधेऽद्धा ॥

—श्री. रा. वि ६–६५

2 रुद्रे स्म्रयुगे निलिम्पगुरुणा दृष्टे विमृष्टे द्विवे
रैन संमदभागधीहि भगवो ब्रह्मेत्युदीर्य स्थितम् ।
आत्मेत्यथोपदिदेश देशिकवरस्तस्मै ... [illegible]
स्याग्रेऽस्त्रमद्रुपपत्नैभवनिधिर्लब्धा [illegible]

सह[1] स्वामृतहस्तेन साम्राज्यपट्टाभिषेकं निर्वर्त्य वरकुमारकं द्वैतसाम्राज्यचक्रवर्तिनं विधाय[2]श्वेतच्छत्रादिराजचिह्नप्रदानेन सामोदमन्वगृह्णात् ॥[3]

नूतनजगद्गुरुः श्रीराघवेन्द्रतीर्थयतिसार्वभौमः बहुकालं गुरुचरणशुश्रूषाचरणपरायणः निजदेशिकाननुसृत्य सञ्चारमाकलयन् 'नववृन्दावनक्षेत्र'[4] मयासीत्। तत्रैव श्रीसुधीन्द्रतीर्थश्रीमच्चरणाः स्वान्तेवासिप्रियवरकुमाराय निखिलमहासंस्थानाधिपत्यं वितीर्य श्रीशके १५४६ तमे रुधिरोद्गारिसंवत्सरे फाल्गुणासितद्वितीयायां (1624—क्रिस्ताब्दे) नारायणध्यानपुरस्सरं वृन्दावनं प्राविशन्। श्रीराघवेन्द्रगुरुराजः निजगुरुवृन्दावनप्रतिष्ठापनपुरस्सरं महासमाराधनं न्यवर्तयत् ॥

---

1. तस्य नाम स ददे सदाशिवो राजराज इव राजितः श्रिया ।
रामभद्र इव भद्रभाजनं तत्क्रमेण जगतां हिते रतः ॥
श्रीसुरेन्द्रपदयं तपस्यया श्रीजयीन्द्र इव कीर्तिसम्पदा ।
विश्रुतोऽहमिव वादसङ्गरे राघवेन्द्रयतिराट् समेधताम् ॥
—श्री. रा. वि. ६–७१–७२

2. मन्त्रपूतै वारिजाद्यैः प्रसूनैः मुक्तासुवर्णे रत्नजालैरुपेतैः ।
वार्भिः शङ्खापूरितैः सोऽभिषिच्य प्राज्ञं विद्याराज्यपदं वितेने ॥
—श्री. रा. वि. ६–७३

3. श्रीरामार्चाः व्यासदेवोपलब्धौ द्वौ शास्त्रीयानां पुस्तकं चामरे च ।
श्वेतच्छत्रं स्वर्णयानं सनादं प्रादादस्मै राजचिह्नं स सर्वम् ॥
—श्री. रा. विजयः ६–७४

4. क्षेत्रमेतत् विजयनगरे (हम्पि) तुङ्गभद्रापरिसृत श्रीमध्वाचार्यमुख्यशिष्य श्रीपद्मनाभतीर्थ–कवीन्द्र–वागीश–व्यासराज–गोविन्दवोडेयर–रघुवर्य–सुधीन्द्र–श्रीनिवास – रामतीर्थ – यतिवरवृन्दावनविलसित माध्वानां यात्रास्थानीभूतं विराजते ।

श्रीमद्राघवेन्द्रगुरुसार्वभौमः महासंस्थानाधिपत्यप्राप्तेरनुपदमेव समग्रभारते सञ्चारमाकलयन् तीर्थ-क्षेत्रयात्रादर्शन-परवादिदिग्विजय-सिद्धान्तस्थापन- पाठप्रवचन - धर्मप्रसार - ग्रन्थरचन - महिमाप्रदर्शन-शिष्य-भक्तजनोद्धारादिलोककल्याणकार्यासक्तः महायशाः राजमहाराजै-रनितरसाधारणगौरवसम्मानपरम्परां सम्प्राप्य निखिललोकमान्यश्च व्यलसत् ॥ अत्र तद्विषयककतिपयमहिमादिकं निरूप्यते ॥

## वादिदिग्विजयः

(क) निखिलविद्याकेन्द्रस्थाने मधुरानगरे श्रीतिरुमलनायकराजस्थाने श्रीगुरुसार्वभौमः महामन्त्रि श्रीनीलकण्ठदीक्षितप्रभृतिभिरन्यैश्च विद्वद्वरैर्मीमांसाशास्त्रे वाक्यार्थविचारमाकलय्य विजयमलभत ।[1] विद्यापक्षपातिनः श्रीनीलकण्ठदीक्षितमहोदयाः श्रीगुरुसार्वभौमप्रणीतं मीमांसान्यायमुक्तासमलङ्कृतं "भाट्टसङ्ग्रह"रूपं ग्रन्थरत्नं स्वलङ्कृत-राजगजराजमारोप्य सवाद्यगौरवं चतुरष्वु वीथीषु महोत्सवं निर्वर्त्य-सबहुमानं यतिवरं सममानयत् ।[2]

(ख) कर्णाटकराजधानीभूते वेलूरनगरे वेङ्कटपतिचक्रेश्वरस्य महास्थानलाङ्कृते वीरभद्र-भैरवभट्टनामानौ शैवविद्वांसौ प्रवर्तितवाद-प्रसङ्गे श्रीराघवेन्द्रमुनिवरः अजीजयत् । तेन प्रमुदितमनाः वेङ्कटपति-

---

1. मन्त्रिश्रीनीलकण्ठाभिधमखिमणिना भट्टतन्त्रानुबन्धे
   ग्रन्थे तावत्त्वदीये करिणि गुणविदारोपितेऽभ्यर्हणाय ।
   कीर्तिस्ते राघवेन्द्रव्रतिविबुधमणे नूनमन्यनवेगा
   दिङ्नागानारुरुक्षुः स्वयमपि सहसा धावदष्टौ दिगन्तान् ॥
   —श्रीगुरुगुणस्तवनम् ।

2. अधिताम्रपर्णि स निमज्ज तत्तटे स्थिताः प्रणम्य नवदेवताः पराः ।
   कृतमालिकातटविलङ्कृतामगान्मधुराभिधां मधुरवाङ्महापुरीम् ।
   तदधीशसंसदि विजित्य पण्डितान् बहुमानितो यतिवरो महीभृता ॥
   —श्री. रा. वि. ७-४६-४७

सार्वभौमः श्रीचरणवादप्रतिभापाण्डित्यकौशलमुग्धः अमुष्मै गुरुभरवे ग्राममेकं वितीर्य मानयाञ्चकार।[1]

(ग) श्रीविठ्ठलक्षेत्रे पण्ढरपुरे शेषनाम्ना प्रख्यातेन पण्डितेन सार्कं बहुकालं वाक्यार्थचर्चां विधाय निजपरमगुरुभिर्विजयीन्द्रतीर्थपादैः विरचितं "वाग्वैखरी" नामविलसितं ग्रन्थरत्नमवलम्ब्य तदुक्तसद्युक्तिजालैः वावदूकं विजित्य श्रीविष्णुसर्वोत्तमत्वं संस्थाप्यानितरसाधारणीं समज्ञामवाप।[2]

एवमेव सर्वत्र परमतनिराकरणपूर्वकं स्वमतस्थापनमातन्वानोऽयं श्रीगुरुवरः द्वैतविजयपताकामुदडाययत् ॥

## राजसम्मानम्

१. तञ्जापुराधीशः विजयराघवनायकः ग्रामभूमिरत्नहारादीन् समर्प्य अमुं यतिप्रवर्हं असेवत।

२. मधुरापुरवराधीशः तिरुमलनायकः श्रीराघवेन्द्रमुनिं ग्रामभूमिप्रदानेन अपूजयत्।

३. कर्णाटकधरणीधवः वेङ्कटपतिरायः भद्रासने श्रीगुरुवरमलङ्कृत्य कनकाभिषेकं विधाय ग्रामदानपुरस्सरं गौरवमार्पयत्।

४. महीशूरपुरवराधीशः दोड्डदेवरायः श्रीरङ्गपत्तने श्रीरङ्गनाथसन्निधौ क्रिस्ताब्दीय 6-7-1663 तमे वत्सरे "देवराजपुर"मिधं ग्राममनर्घरत्नाभरणानि च समर्प्य कृतार्थो बभूव।*

---

1. शेष भट्टपुरभैरवभट्टो वीरभद्र इति विश्रुतविद्वान्।
   नर्मणैव परिभूय नरेन्द्राद्ग्रामरत्नमचिरात्समगृह्णात् ॥

—श्री. रा. वि. ८–४

2. "वाग्वैखरी निर्जितमन्यशेषः।"

—श्रीगुरुस्तोत्रम्

* Mysore Archaeological Report–1944

५. कोल्हापुरे बहुकालवास्तव्याय श्रीराघवेन्द्रगुरवे महाराष्ट्राधीशः शिवाजीमहाराजः श्रीचरणतपोमहिमादिभिः प्रभावितः तत्सन्निधिलब्धज्ञानोपदेशः धनकनकादिना गौरवं समर्प्य गुर्वनुगृहीतोऽभूत्।

६. विजयपुर (बिजापुर) यवनभूपः इम्मडि इब्राहिं आदिल् शाह नामकः गुरुवराय "जगद्गुरुः" इति प्रशस्तिं राजलक्षणीभूतं श्वेतच्छत्रं च सबहुमानं वितीर्य कृतकृत्य आसीत्।

७. यादवपुराधीशः (आदवानीपुरेशः) नवाब् सिद्दीमसूदखान इति विख्यातो म्लेच्छराजः श्रीगुरुवरमहिमानं परीक्ष्य स्वापराधपरिच्छेदाय मन्त्रालयग्रामं भक्तिपूर्वकं समर्प्य गुर्वनुग्रहपात्रीभूतोऽभूत्।

एवमेवहि सहस्राधिकाः नैके राजानः सचिवसामन्तदण्डनायकप्रभृतयः ग्रामभूमिधनकनकवस्तुवाहनादिकं सगौरवं प्रदाय गुरुकृपाभाजनीभूता बभूवुः॥

## महिमाप्रदर्शनम्

(क) तञ्जापुरराज्ये द्वादशाब्दिकयामनावृष्ट्यापातितायां राज्ञः धान्यागारे शून्यागारे सञ्जाते परमकारुणिकोऽयं गुरुराजः तत्र बीजाक्षरविन्यासेन धान्यान्यक्षय्याणि विधाय निजतपःप्रभावेण वृष्टिपतनमारचय्य देशममुमरक्षत्।[1]

(ख) तञ्जापुराधीशेन विजयराघवनायकेन वितीर्णमनर्घं रत्नहारं प्रीतिहोमाय समर्प्य परेद्युः पुनरपि होमकुण्डात्समादाय पूर्वाधिकतेजोविराजितं रत्नहारं प्रदर्श्य सर्वान् राजनश्चाश्चर्यसागरनिमग्नानकलयत्।[2]

(ग) ताम्रपर्णीनदीतीरे समाजबहिष्कृतं शरणागतं भूसुरं शङ्खोदकप्रोक्षणेन पवित्रं विधाय शङ्खोदकमहिमानमदर्शयत्।

---

1. "ದ್ವಾದಶವರ್ಷಗಳ್ಬಂದಕ ಸಲಿಸಿದೆ । ಮೇದಿನಿಪತಿಗೆ ಮಹಾದಯವಂತ ॥"
—ಶ್ರೀ ಜಗನ್ನಾಥದಾಸವರ್ಯರು

2. "ಮತ್ತವದಗಜಾಸಿದ ರತುನಮಾಲೆಯ । ಕ್ಷಿತಿಪಗೆ ತಂದಿತ್ತುಕಲವಮುಣಿಸಿದನೆ ॥"
—Abid

(घ) चिन्तुर्गे सकलजनसमक्षं निजभक्तं वेङ्कण्णं पुष्पकविमान-मधिरूढं कृत्वा तस्मै मोक्षमनुजग्राह ।[1]

(च) किरीटगिरिग्रामे चूतफलरसभरितभाण्डपतितं वेङ्कप्प-देशायिनः मृतं पुत्रं मन्त्रोदकप्रोक्षणेन उदजीवयत् ।[2]

(छ) अन्यदा कारुण्यवारांनिधिः श्रीराघवेन्द्रमुनीन्द्रः निषेक-मुहूर्तदिने शय्यागारकवाटताडितशिरस्कं मृतं निजशिष्यं प्राणदान-पूर्वकमरक्षत् ।[3]

(ज) शिरसङ्गिदेशायिनः वेदाप्रामाण्यवादिनः स्पर्धालोः दुरा-शङ्कानिवारणार्थं वेदमन्त्रोच्चारणपूर्वकं मुसलं किसलयितं कृत्वा वेदमहिमानं प्रदर्श्य तेन सम्मानितः तस्मिन्ननुग्रहं चकार ।[4]

(झ) पण्ढरपुरदिग्विजयकाले प्रखरसूर्यातपतप्ते निर्जलनिर्जरा-रण्यप्रदेशे निजशिष्यभार्यायां प्रसूतायां भूमौ योगदण्डाघातेन निर्मलजलोत्सेचनं निर्माय, अम्बरे निजकरवस्त्रोत्क्षेपणेन शीतल छायां विधाय तां सद्योजातशिशुञ्चापालयत् ।[5]

(ट) विजयपुराद्धिक्कोडिग्रामगमनसमये मध्येमार्गं पिपासाकुलितं जलालाभेन मृतप्रायं भूसुरमेकं मन्त्रशक्त्या जलनिर्माणविधिना समजीवयत् ।[6]

---

1. "ಪ್ರಕಟಿಸಿ ತೋರಿದಿ ಮುಕುತಿಯ ಬೇಡಿದ । ಭಕುತನ ಯೋಗ್ಯತೆ ನಿಖಿಳ ಜನರಿಗೆ ॥"
—Abid

2. "ಚೂತರಸಫಲದಿ ಪೋತವಬುಳಗೆ । ಮೃತಿಭೀತಿಬಿಡಿಸಿದ ಅನಾಥರಕ್ಷಕ"
—Abid

3. "ಭೃತ್ಯಗೆ ಬಂದಪಮೃತ್ಯು ಕಳೆದು ಸುಖ । ವಿತ್ತು ಪೊರೆದ ಪುರುಷೋತ್ತಮದಾಸ ॥"
—Abid

4. "ಕ್ಷಿಪ್ರದಿ ತೋರಿದಿ ವಿಪ್ರರ ಮಹಿಮೆಯ । ಆ ಸ್ಪರ್ಧಿಗಳಿಗೆ ಅಪ್ರತಿ ಗುರುವೇ"
—ಶ್ರೀ ಜಗನ್ನಾಥದಾಸರು

5. "ಮಳಲ ಮಾರ್ಗದೊಳು ಲಲನೆ ಪ್ರಸೂತಿಸೆ । ವನನ ಕಮಂಡಲದೊಳು ಜಲತೋರ್ದೆ ॥
ಬಿಸಿಲಿಂದಳುವಾ ಚಿಣ್ಣಾ । ಗಸದಲಿ ನಿಲಿಸಿದ್ಯೋ ಅಸಮಮಹಿಮನೆ ॥"
—Abid

6. "ವಿಹಿನದಿ ಬಡಾತಪದಿ ಬೆಂದ; ಆ– । ಕೃಪಸುತನುಳುಹಿದ ಕೃಪಣಜನಾಪ್ತ ॥"
—Abid

(ठ) मानवीग्रामवर्तिनि श्रीप्राणदेवालये कनकदासवरः द्वितीय-जन्मनि चण्डालजनिर्भूत्वा श्रीगुरुवर्यदर्शनस्मारित पूर्वजन्मवृत्तान्तः श्रीराघवेन्द्रगुरुममुं श्रीव्यासराजगुरुं मत्वा अस्मै सर्षपान् समार्पयत्। गुरुवरश्च तान्स्वीकृत्य स्वमहिमानं प्रदर्श्य तमनुजग्राह।[1]

(ड) अस्मिन्नेव हि सन्दर्भे गुरुवरदर्शनार्थं समागतेभ्यः वेणु-ग्रामाभिजनेभ्यः ( विद्रुहळ्ळि) श्रीनिवासाचार्येभ्यः स्वमहिमप्रदर्शन-पूर्वकं तान् सकरुणमन्वगृण्हात्।

(ढ) कन्दनावतीग्रामवासिनं कञ्चननिजशिष्यं वेङ्कण्णनामानम-प्रबुद्धं तत्कृतस्वनामसङ्कीर्तनमाहिम्ना दिवान् वेङ्कण्णपन्त इति बिरुद-भाजं आदवानीसचिवपदाधिरूढमतनोत्।

(त) कस्यचन म्लेच्छाधिपस्य नवावस्य तनये सर्पदष्टे मृते गरुडमन्त्रजपप्रभावेण तमुज्जीवयामास।[2]

(थ) कश्चनशिष्यः विवोढुकामः गुरुवरमृत्तिकाशौचसमये विवाह-सहायद्रव्यमयाचत स्मितवदनः गुरुवरः तस्मै अञ्जलिपरिमितां मृत्तिकां प्रदाय "गच्छ, तव विवाहो भविष्यती"ति तमादिशत्। सभक्ति-प्रकर्षं स्वीकृतमृत्तिकः सः कस्मिंश्चिद्ग्रामे ब्रह्मराक्षसपीडितगृहे गृह-द्वारे सुप्तः निशीथे प्रबुद्धः गुरुमृत्तिकाप्रयोगप्रभावेण ब्रह्मराक्षसं दग्धंविधाय तद्गृहस्वामिना सम्मानितः तज्ज्येष्ठपुत्रीमुदवहत्।

---

1. "ಪತಿತನ ನಿಜಯೋಗ್ಯತೆಯನ್ನರಿತು ನೀ । ದ್ವಿತಿಯ ಜಾತಿಗಿದೆ ಯತಿಕುಲವರ್ಯ ॥"

—Abid

2. "ಕರೆದ ಜನಪನ ಅನುಜನುಜನಿ ತಿ । ನೃಪನಿಗೆ ಮೂವಿದಿ ಫಲವದೆಂತ ॥

—ಶ್ರೀ ಜಗನ್ನಾಥದಾಸರು

(द) आद्वानीपुरेशः सिद्दीमसूदखाननामा भूपः गुरुवरपरीक्षणार्थं मांसादिकं समर्पितवान्। श्रीगुरुपुङ्गवः मन्त्रितजलोक्षणेन तत् फल-पुष्परूपं विधाय स्वमहिमानमदर्शयत्।[1]

एवं विविधं शताधिकं महिमानं प्रदर्श्य श्रीराघवेन्द्रयतिपुङ्गवः जगदपालयत्॥

अयञ्च योगिनायकः वृन्दावनप्रवेशानन्तरं शताधिकेषु वर्षेषु व्यतीतेष्वपि सर् थामस् मन्रोमहोदयाय प्रत्यक्षं स्वदर्शनमनुगृह्य,* किंबहुना? अद्यापि च प्रत्यहमगण्यमहिमादिकं प्रकटीकुर्वन् लोक-कल्याणकार्यासक्तः अस्ति विराजमानः॥

## ग्रन्थरचना

श्रीराघवेन्द्रयतिसार्वभौमः हृद्यत्र्यन्तविद्या, प्रस्थानत्रय-भाष्य-टीकादीन् सम्यग्व्याख्याय विद्वज्जनेषु महोपकारमातन्वानः दिगन्त-विश्रान्तधवलकीर्तिमापेदे॥

गुरुवरप्रणीतानीमानिग्रन्थरत्नानि।

१-३. वेदत्रयविवृतिः
४. मन्त्रार्थमञ्जरी
५-९. पुरुषसूक्तादिपञ्चसूक्तव्याख्याः
१०-१९. दशोपनिषदां खण्डार्थाः
२०. गीतार्थसङ्ग्रहः (गीताविवृतिः)
२१. गीताभाष्यप्रमेयदीपिकाव्याख्या
२२. गीतातात्पर्यटीकाविवरणम्
२३. तन्त्रदीपिका

---

1. "ರಾಘವೇಂದ್ರ । ರಾಜಿತ ಗುಣಸಾಂದ್ರ ॥ ಪ ॥
ಅನಿವೇದಿತಭೋಜನವಸ್ತುಗಳಂ । ಫಲವ ಮಾಡಿಸಿದನುಪಮಚರಿತ ॥
ದಾಶಗುರುಜಗನ್ನಾಥ ವಿಠಲನ । ದೂತನೆ ಮಂತ್ರನಿಕೇತನ ನಿಲಯ ॥
—ಶ್ರೀ ಜಗನ್ನಾಥದಾಸರು

* "Madras District Gazetteers" Vol. No. 1 BELLARY Chapter XV. Adoni Tq Page No. 213.
by W. Francis, Esq. I.C.S.

२४. न्यायमुक्तावलिः
२५. अणुभाष्यटीका तत्त्वमञ्जरी
२६. सूत्रभाष्यतत्वप्रकाशिकाभावदीपः
२७. श्रीमदनुव्याख्यानन्यायसुधापरिमलः
२८-३७. दशप्रकरणटीकाव्याख्याः
३८. श्रीरामचारित्र्यमञ्जरी
३९. श्रीकृष्णचारित्र्यमञ्जरी
४०. श्रीमद्भारततात्पर्यनिर्णयभावसङ्ग्रहः
४१. वादावलीव्याख्या
४२. तत्त्वप्रकाशिकातात्पर्यचन्द्रिकाप्रकाशः
४३. तर्कताण्डवव्याख्या
४४. प्रमाणपद्धतिव्याख्या
४५. अणुमध्वविजयव्याख्या
४६. भाट्टसङ्ग्रहः
४७. प्रातःसङ्कल्पगद्यम्
४८. प्रमेयसङ्ग्रहः

## वृन्दावप्रवेशः

स्वावतारपरिसमाप्तिदत्तचित्तः श्रीराघवेन्द्रगुरुसार्वभौमोऽसौ पूर्वं श्रीमत्प्रह्लादावतारसमये स्वानुष्ठितयज्ञवेदिकासमलङ्कृते[1] कृष्णदेवदिव्य-रदनसम्भूततुङ्गभद्रातरङ्गिणीमङ्गलतरङ्गसम्पाविते श्रीमन्मन्त्रालक्षेत्रे सप्तशतवर्षपर्यन्तं सुन्दरवृन्दावनान्तर्गतस्सन् शरणगतभक्तजन वृन्दावनाय भक्तजनयथायोग्यंदयादृष्टिरूपतया विराजितः लोककल्याणं चिकीर्षुः तदर्थं स्वमहिम्ना स्वावसीमन्त्रालयग्रामः प्रह्लादावतारकालीनस्वकुलदेवतां साक्षाद्दुर्गारूपां श्रीमन्चाल्याम्बिकां प्रार्थनया साक्षात्कृत्य. प्रसन्नया तया स्वनि[illegible] तपश्च[illegible] लब्ध्या, पितृ-

वाक्यपरिपालनरतस्य दण्डकारण्ये सञ्चरमाणस्य देवदेवस्य श्रीरामचन्द्रप्रभोः पादपद्मसंस्पर्शपवित्रीकृतेन, मच्येन्द्रोपलेन निर्मापितस्वीयवृन्दावनः, मङ्गलमुहूर्ते निजपूर्वाश्रमीयज्येष्ठभ्रातुः श्रीगुरुराजाचार्यस्य पौत्राय, नैजसन्निधौ समधिगतसमस्तशास्त्राय, अत एव प्रकाण्डपण्डिताय श्रीवेङ्कण्णाचार्यशर्मणे सानन्दवितीर्णपरमहंसाश्रमः, निर्वर्तितमन्त्रमुद्राधारणगुरूपदेशः, संवर्तितश्रीसर्वज्ञविद्यासाम्राज्यपट्टाभिषेकः. अनुगृहीत "श्रीमद्योगीन्द्रतीर्था"भिधानः, अमन्दानन्दमविन्दत॥

तदनु श्रीशके १५९३ तमे विरोधिकृत्संवत्सरे* श्रावणकृष्णद्वितीयायां कवेर्वासरे सङ्कल्पितस्वीयवृन्दावनप्रवेशः प्रियवरकुमाराय श्रीयोगीन्द्रतीर्थगुरुवे समर्पितमहासंस्थानाधिपत्यः, निर्वर्तितजपतपाद्यनुष्ठानः निजपूर्वाश्रमीयबन्धुषु पुत्रपौत्रप्रपौत्रेषु-श्रीलक्ष्मीनारायणाचार्य-पुरुषोत्तमाचार्य-बालकश्रीनिवासाचार्य* प्रभृतिषु निजगुरुविरहासहमानसेषु, परिखिद्यमानेषु; तदर्थसम्मिलतपौरजनपदेषु; अथ सकलाशामुखमुखरितेषु मङ्गलवाद्येषु, सन्ततसंस्तूयमानस्वस्त्ययन-विविधविजयविरुदावलीसमेधितसरसकवितानिचयेषु विबुधवरेषु, गुरुस्तवनभजन-नर्तनपरेषु भागवतेषु, तद्दर्शनजनितपुलकोद्गमेषु सर्वजनेषु सभक्त्यावेगं प्रदीयमानहस्तलाघवेषु श्रीयोगीन्द्रतीर्थेषु, भक्त्यतिशयप्रणम्यमानशिरस्सु वेङ्कण्णपन्तप्रमुखसचिवसामन्त-सन्ततिषु करकमलद्वंद्वविलसितदण्डकमण्डलुः स किल गुरुपुङ्गवः, सकरुणमन्दहासविलसितमुखारविन्दसन्दृष्टवन्दारुजनसन्दोहः, निजौदार्यलिपीकृतनाकिनायकचिन्तामणिः, शरणजनमन्दारः अलङ्कृताभय-वरदमुद्रः, प्रतिपदमुपदिश्यमानरमारमणसर्वोत्तमतत्त्वः, सर्वजनेषु पश्यत्सु सत्सु सशरीरं वृन्दावनान्तर्गतः योगासने सन्निषण्णः, निजहृदयपुण्डरीकसंस्थापितपुण्डरीकाक्षः धृतारुणवसनः करधृतजपमालः, द्वादशादित्यसदृशसंशोभितद्वादशोर्ध्वपुण्ड्रचारुविग्रहः, नारायणमन्त्रपरायणः, निमीलितार्धनयनः, प्रणवोच्चारणपूर्वकं स्वशिरसि स्वाज्ञाविन्यासिता-

* 1671 A. D.

* भावि श्रीवादीन्द्रतीर्थश्रीमच्चरणः ।

नेकशालग्रामः, परममङ्गलमूर्तिः श्रीमद्राजाधिराजराघवेन्द्रगुरुसार्वभौमः, जनदर्शनविदूरोऽपि निजभक्तदर्शनादूरः सुन्दरवृन्दावनमधिष्ठाया-प्यात्मब्रह्ममन्दिरे विलसन्नद्यापि विद्योतते ॥

श्रीमद्योगीन्द्रतीर्थश्रीमच्चरणः श्रीराघवेन्द्रगुरुसशरीरवृन्दावन-प्रवेशानन्तरं शिरसाधृतनिजदेशिकादेशः, ससम्भ्रमसमनुष्ठितस्वगुरु-वृन्दावनप्रतिष्ठः, तस्मिन्नेव हि मङ्गलदिने समाचरितस्वगुरुमहासमा-राधनः, व्यवस्थापितनिजगुरुवृन्दावनसन्निधिपूजाविशेषः, जगत्कल्याण-चिकीर्षुः श्रीमन्मध्वाचार्यवेदान्तविद्यासिंहासनाधिरूढः चिरमवर्धत ॥

पुण्यपीयूषपूर्णश्रीगुरुराघवेन्द्रसशरीरवृन्दावनप्रवेशवर्षमारभ्य पेयमः पर्यन्तं त्रिशतं समाः व्यतीयुः। महामहिम्नः यतिवरस्य त्रिशताब्दीय-पुण्दिनेऽस्मिन् श्रीगुरुचरणानां त्रिशतमानमहोत्सवः निखिलभारते सभक्तिश्रद्धं सर्वैरेवं समनुष्ठीयमानो राजते ॥

विदितपूर्वमिदं सर्वेषां सुजनानां यच्छ्रीमद्राघवेन्द्रगुरुवरमठाधी-श्वराणां ज्ञानभक्तिवैराग्यतपोनुष्ठानप्रथितयशसां श्रीमन्त्रालयविलसित-सुन्दरवृन्दावनमन्दिराणां स्वभक्तवृन्दावनासक्तानां प्रातःस्मरणीयानां परमपूज्यश्रीमत्सुयमीन्द्रतीर्थश्रीमच्चरणानामाज्ञानुसारेण १९४५ तमे क्रिस्ताब्दे गरलनगरे (नञ्जनगूडु) श्रीपरिमलसंशोधनप्रकाशनमन्दिर-मस्थापीति ॥

श्रीमदाचार्यपरम्परागतानां प्राचीनाचार्याणां वेद-वेदान्त-न्याय-मीमांसा-व्याकरण-काव्य-नाटकालङ्कारादि प्रबन्धप्रवराणां सद्ग्रन्थ-संशोधन-सम्पादन-प्रकाशनादिकार्यं यथास्थिततया निर्वहतोऽस्य प्रका-शनमन्दिरस्य रजतोत्सवं श्रीगुरुसार्वभौमत्रिशतमानोत्सवेन सममिदा-नीमस्माभिस्ससम्भ्रमं समनुष्ठातुं मोमुदीत्यस्माकं चेतः।

महदिदं प्रमोदस्थानं नः यच्छ्रीमत्परमहंसेत्याद्यमन्दविरुदवृन्दभूषि-तानां श्रीमन्न्यासराजगुरुसार्वभौमानां कर्णाटकविद्यासिंहासनाधीश्वराणां श्रीमद्विद्यापयोनिधितीर्थश्रीपादानामाध्यक्ष्येऽस्मिन्नेव हि त्रिशतमान-महोत्सव-रजतोत्सवमङ्गलप्रसङ्गे कतिपयकाव्यशास्त्रादिग्रन्थानां तथा 'परिमल' सांस्कृतिक-धार्मिक-मासपत्रिकाविशेषसञ्चिकायाश्च प्रकाशन-मद्य श्रीमच्चरणानाममृतहस्तेन निर्वर्त्यत इति।

॥

श्रीमद्विजयीन्द्रतीर्थविरचिता

# परतत्वप्रकाशिका

ये नित्यं पद्वावयमानसरणीसंशीलनालङ्कृता
स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।
या चानेकविनेयपट्पदततेः संफुल्लमल्लीसमा
सैषा वाग्विजयीन्द्रसंयमिमणेः ज्ञानार्थिभिस्सेव्यताम् ॥

विदितचरमेवेदं समेषां विदुषां यदस्मत्परिमलसंशोधन-प्रकाशन-मन्दिरतः इतः पूर्वं श्रीमद्राघवेन्द्रगुरुसार्वभौमानां परमगुरुभिः श्रीमद्विजयीन्द्र-तीर्थपूज्यचरणैः विरचिते 'अणुसूत्रन्यायसंग्रह–शैवसर्वस्वखण्डना'भिधं ग्रन्थ-द्वयं, तदनु श्रीनृसिंहाश्रममुनि–श्रीमदप्पय्यदीक्षितेन्द्रविरचितयोः 'भेदधिक्का-रोपक्रमपराक्रमा'भिधयोः खण्डनपरं 'भेदविद्याविलासोपसंहारविजया'भिधं प्रबन्धरत्नद्वयं च विद्वज्जनमोदाय प्रकटीकृतमिति ।

इदानीं श्रीमद्विजयीन्द्रतीर्थगुरुपादविरचितं श्रीमदप्पय्यदीक्षितेन्द्रविरचितयोः "शिवकर्णामृत–शिवतत्वविवेक"योः खण्डनपरं "परतत्वप्रकाशिका"ख्यं प्रबन्धप्रवरं भारतसर्वकारधनसाहाय्येन मुद्राप्य विबुधसन्निधौ समर्पयितुं मोमुदीत्यस्माकं चेतः ।

वयमिदानीं श्रीमद्विजयीन्द्रगुरुपादसमलंकृतपीठपरम्परा, ग्रन्थकर्तुः अमरचरितं, कालदेशादिविचारः, वादिदिग्विजयः, ग्रन्थरचना, राजसम्मानं, प्रकृतग्रन्थपरिचयः, इत्यादिविषयजातं ससम्प्रदायं किञ्चिन्निवेदयितुमभिलषाम ॥

नेकशालग्रामः, परममङ्गलमूर्तिः श्रीमद्राजाधिराजराघवेन्द्रगुरुसार्वभौमः जनदर्शनविदूरोऽपि निजभक्तदर्शनादूरः सुन्दरवृन्दावनमधिष्ठाया-प्यात्मशङ्ख्मन्दिरे विलसन्नद्यापि विद्योतते ॥

श्रीमद्योगीन्द्रतीर्थश्रीमच्चरणः श्रीराघवेन्द्रगुरुसशरीरवृन्दावन-प्रवेशानन्तरं शिरसाधृतनिजदेशिकादेशः, ससम्भ्रमसमनुष्ठितस्वगुरु-वृन्दावनप्रतिष्ठः, तस्मिन्नेव हि मङ्गलदिने समाचरितस्वगुरुमहासमा-राधनः, व्यवस्थापितनिजगुरुवृन्दावनसन्निधिपूजाविशेषः, जगत्कल्याण-चिकीर्षुः श्रीमन्मध्वाचार्यवेदान्तविद्यासिंहासनाधिरूढः चिरमवर्धत ॥

पुण्यपीयूषपूर्णश्रीगुरुराघवेन्द्रसशरीरवृन्दावनप्रवेशवर्षमारभ्य पेषमः पर्यन्तं त्रिशतं समाः व्यतीयुः । महामहिम्नः यतिवरस्य त्रिशताब्दीय-पुण्दिनेऽस्मिन् श्रीगुरुवराणां त्रिशतमानमहोत्सवः निखिलभारते सभक्तिश्रद्धं सवैभवं समनुष्ठीयमानो राजते ॥

विदितपूर्वमिदं समेषां सुजनानां यच्छ्रीमद्राघवेन्द्रगुरुवरमठाधी-श्वराणां ज्ञानभक्तिवैराग्यतपोनुष्ठानप्रथितयशसां श्रीमन्त्रालयविलसित-सुन्दरवृन्दावनमन्दिराणां स्वभक्तवृन्दावनासक्तानां प्रातःस्मरणीयानां परमपूज्यश्रीमत्सुयमीन्द्रतीर्थश्रीमच्चरणानामाज्ञानुसारेण १९४५ तमे क्रिस्ताब्दे गरळनगरे (नञ्जनगूडु) श्रीपरिमलसंशोधनप्रकाशनमन्दिर-मस्थापीति ॥

श्रीमदाचार्यपरम्परागतानां प्राचीनाचार्याणां वेद-वेदान्त-न्याय-मीमांसा-व्याकरण-काव्य-नाटकालङ्कारादि प्रबन्धप्रवराणां सङ्ग्रह-संशोधन-सम्पादन-प्रकाशनादिकार्यं यशस्वितया निर्वहतोऽस्य प्रका-शनमन्दिरस्य रजतोत्सवं श्रीगुरुसार्वभौमत्रिशतमानोत्सवेन सममिदा-नीमस्माभिस्ससम्भ्रमं समनुष्ठातुं मोमुदीत्यस्माकं चेतः ।

महदिदं प्रमोदस्थानं नः यच्छ्रीमत्परमहंसेत्याद्यमन्दविरुदवृन्दभूषि-तानां श्रीमन्व्यासराजगुरुसार्वभौमानां [illegible]

[illegible]

महोत्सव-रजतोत्सवमङ्गलप्रसङ्गे कतिपयकाव्य [illegible]

'परिमल' सांस्कृतिक-धार्मिक-[illegible]

मद्य श्रीमच्चरणानाममृतहस्तेन निर्वर्त्येत इति ।

श्रीमद्विजयीन्द्रतीर्थविरचिता

# परतत्त्वप्रकाशिका



ये नित्यं पदवाक्यमानसरणीसंशीलनालङ्कृता
स्तेषामेव करोति या प्रतिपदं सन्तोषमाकर्णनात् ।
याचानेकविनेयषट्पदततेः संफुल्लमल्लीसमा
सैषा वाग्विजयीन्द्रसंयमिमणेः ज्ञानार्थिभिस्सेव्यताम् ॥

विदितचरमेवेदं समेषां विदुषां यदस्मत्परिमलसंशोधन-प्रकाशन-मन्दिरतः इतः पूर्वं श्रीमद्राघवेन्द्रगुरुसार्वभौमानां परमगुरुभिः श्रीमद्विजयीन्द्र-तीर्थपूज्यचरणैः विरचितं 'ब्रह्मसूत्रन्यायसंग्रह–शैवसर्वस्वखण्डना'भिधं ग्रन्थ-द्वयं, तदनु श्रीनृसिंहाश्रममुनि–श्रीमदप्पय्यदीक्षितेन्द्रविरचितयोः 'भेदधिक्का-रोपक्रमपराक्रमा'भिधयोः खण्डनपरं 'भेदविद्याविलासोपसंहारविजया'भिधं प्रबन्धरत्नद्वयं च विद्वज्जनमोदाय प्रकटीकृतमिति ।

इदानीं श्रीमद्विजयीन्द्रतीर्थगुरुपादविरचितं श्रीमदप्पय्यदीक्षितेन्द्रविरचितयोः "शिवकर्णामृत–शिवतत्वविवेक"योः खण्डनपरं "परतत्वप्रकाशिका"ख्यं प्रबन्धप्रवरं भारतसर्वकारधनसाहाय्येन मुद्राप्य विबुधसन्निधौ समर्पयितुं मोमुदीत्यस्माकं चेतः ।

वयमिदानीं श्रीमद्विजयीन्द्रगुरुपादसमलंकृतपीठपरम्परा, ग्रन्थकर्तुः अमरचरितं, कालदेशादिविचारः, वादिदिग्विजयः, ग्रन्थरचना, राजसम्मानं, प्रकृतग्रन्थपरिचयः, इत्यादिविषयजातं ससम्प्रदायं किञ्चिन्निवेदयितुमभिलषाम ॥

## द्वैतसिद्धान्तः–तत्प्रतिष्ठापनाचार्याः

अयि, महीमण्डलमण्डनायमानपण्डितप्रकाण्डाः, भगवद्भक्तिमञ्जरीपिञ्जरितहृत्कुञ्जरञ्जितप्रभञ्जना निरञ्जनाः नाऽज्ञातमावेदनीयं यत्सर्वे जना आविपालगोपालकं सुखमेवापेक्षन्ते न मनागपि दुःखसंस्पर्शम् । जननमरणयातायातजन्यदुःखपरम्परापारावारनिपतिता बम्भ्रम्यमाणचित्ताः विषमविषयानले दन्दह्यमानकायाः इतस्ततस्सञ्चलन्तोऽपि अलंबुद्धिमनासाद्य विक्षुब्धमानसाः अलब्धशरणाः कान्दिशीकास्सुरनरतिर्यगादियोनिषु संसरन्ति । तानुद्दिधीर्षुर्भगवान्नारायणोऽरविदूरः परमकारुणिकः ब्रह्मादिनिलिम्पगणैरभ्यर्थितः श्रीवेदव्यासरूपेणावतीर्य ज्ञानमुपदिदेशाधिकारिभ्यः निराकृतमनोविकारेभ्यः विस्मारितकामेभ्यः । तदाज्ञया परममङ्गला श्रुतिदेवी मातृवदव्याजप्रेम्णा दुःखनिवृत्त्यै परमसुखावाप्त्यै च उपायमायोजयामास । गौतममुनेश्शापात्कालवैकल्याच्च नष्टधर्मज्ञानान्साधूननुजिघृक्षुः व्यासमुनिः श्रुत्यर्थनिर्णयाय ब्रह्मसूत्राणि चकार । तदुपबृंहणाय भागवत-भारतादिपुराणजातं विरचय्य विज्ञानमणिमुद्द्योतयांबभूव अज्ञानतिमिरतिरोहितं जगत्पतिं हृत्कुहरनिवासिनं रमारमणं चापरोक्षगोचरतामानिनाय । 'अम्बुवदग्रहणात्तु न तथात्वं', 'अतोऽनन्तेन तथा हि लिङ्गं' इत्युक्तदिशा निर्व्याजस्नेहार्द्रहृदयेन अणोरणीयसः महतो-महीयसः अचिन्त्यमहिम्नः नारायणस्य साक्षात्कारमन्तरा अज्ञाननिवृत्तिरिष्टावाप्तिश्च न सिध्यतः । तदज्ञाननिबन्धना दुःखपरम्पराऽपि न लीयते । 'पुंस्त्वादिवत्त्वस्यसतः', 'तद्गुणसारत्वात्तु' इत्युक्तप्रकारेण स्वरूपतः ज्ञानानन्दात्मकोऽपि जीवः अनादिकामकर्मपाशप्रतिबद्धगतिः दुःखसंस्पर्शमनुभवति । कथं नु खलु अनाद्यज्ञाननिगडनिकर्तनेनाऽऽत्मानं मोचयितुं पारयेत् विलुप्तचेष्टः प्राकृतोऽयं वराको जनः ! । राजदर्शनाद्बन्धनिवृत्तिमिव जगत्पतिं श्रीहरिमवलोक्यैव निगडविमोचनमुपकल्पयितुं प्रभवति जीवः महात्मनामुपदेशप्रकारदर्शितपथः ।

बहवो वादिनः बहोः कालात् नास्तिकदर्शनान्युद्भाव्य श्रीव्यासदेशिकोपदेशमावृत्य संशयाज्ञानविपरीतज्ञानानि प्रसारयामासुः । तदर्थमनुक्रोशयुक्तः भगवान्नारायणः दुर्ज्ञानमपसार्य सच्छास्त्रनिर्माणेन साधुजनानुद्धर्तुं, अपगतदोषसंस्पर्शमसंशयं संशयच्छिदं भुवनजीवनं मुख्यप्राणमादिदेश । अज्ञानार्थिज्ञानयोग्र-भगवत्कृपापात्रभूतसल्लोककृपालुत्र्यक्षरुद्रार्थितभगवदाज्ञां शिरसि परमादरेणानर्घ्यशिरोरत्नविधाय, तथाशेषदेवताप्रार्थनां हारवद्हृदिनिधाय सर्वस्वकीयसज्जनानुग्रहेच्छया श्रीवायुदेवः भारतभुवि श्रीमध्वरूपेणावतीर्य श्रुति-स्मृति-पुराणेतिहासाद्यनन्तविद्याविवेचनेन प्रतिभातपरावरः मेघच्छन्नं रविमिव वायुः, दुश्शास्त्रतिरोहितप्रभावं नारायणं प्रदर्शयांबभूव साधुजन निकायाय । विज्ञान-शून्य-ब्रह्मैक्यवादाः शिवाद्यन्यदेवताप्रवादाः पाशुपताद्यागमाः समुत्पद्य अनौपधं क्षराक्षरोत्तमत्वं नारायणस्याविदितमकुर्वन् । तान् सर्वानन्यथाकृत्वा अवितथमतं सत्सिद्धान्तमुद्घोषयामास वायुदेवः ।

श्रीहरिः सर्वोत्तमः सर्वगुणपरिपूर्णः । ब्रह्मादिदेवताः तारतम्येन व्यवस्थिताः तदाज्ञापरिपालने गृहीतावताराः धर्ममार्गमुपदिश्य साधुजनानुद्धरन्ति । सर्ववेदान्तप्रत्ययन्यायेन श्रीहर्याराधनं अंगाश्रितसर्वदेवतोपासनं च यथायथं भक्त्याऽनुष्ठेयम् । अनासक्तियोगेन फलाभिसन्धिं विना "अग्निहोत्रादि तु तत्कार्यायैव" इत्युक्तदिशा विहितकर्माण्यनुष्ठायापगतमलो ज्ञानचक्षुषा 'पितरं पतिं गुरुतमं रमावल्लभं' हृदि साक्षात्कृत्य 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्तेचास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादि श्रुत्युक्तरीत्या अनिष्टमपहाय स्वरूपानन्दसन्दोहमनुभवति । अयमेव परमसिद्धान्तः प्रतिष्ठापितः श्रीव्यासानुमत्या वाय्ववतारभूतेन श्रीमन्मध्वाचार्येण । इममेव सिद्धान्तं श्रीमध्वशिष्यप्रशिष्याः जगति प्रचाययामासुरसकृदुपदेशेन ग्रन्थनिर्माणेन सत्पथप्रवर्तितमार्गेण । तेषु श्रीपद्मनाभतीर्थाः, श्रीटीकाचार्येत्युपपदप्रथाप्रथिताः श्रीमज्जयतीर्थाः, श्रीकवीन्द्र-राजेन्द्र-विबुधेन्द्र-लक्ष्मीनारायणतीर्थाः (श्रीपादराजयोगिनः), श्रीमच्चन्द्रिकादिप्रबन्धप्रणेतारः श्रीव्यासयोगिनः,

तदनु तत्प्रीतिभाजनभूताः प्रधानशिष्याः चतुरधिकशतग्रन्थरत्नरचयितारः शैवाद्वैतखण्डनपटुतरमनीषाः श्रीमत्सुरेन्द्रतीर्थकरसरसीरुहसमुद्भवाः श्रीविजयीन्द्रतीर्थगुरुचरणाः, ततश्च तदन्तेवासिनः श्रीसुधीन्द्रतीर्थाः, गुरुसार्वभौमाः श्रीराघवेन्द्रतीर्थश्रीपादाः अंगुलीनिर्देशनेन गणनामर्हन्ति ।

## द्वैतपीठपरम्परा

श्रीमन्मध्वाचार्यप्रवर्तितद्वैतसाम्राज्यसिंहासने श्रीमदाचार्यप्रधानशिष्याः श्रीपद्मनाभतीर्थ-श्रीनरहरितीर्थ श्रीमाधवतीर्थ श्रीमदक्षोभ्यतीर्थमुनिवराः क्रमशः व्यराजन्त । तदनु श्रीमदक्षोभ्यतीर्थ प्रियशिष्याः द्वैतभाष्यटीकाकाराः श्रीमज्जयतीर्थयतीन्द्राः सर्वज्ञसिंहासनमलंचक्रुः । ततश्च तदन्तेवासिनः श्रीविद्याधिराजव्रतिवराः द्वैतविद्यासाम्राज्यं परिपालयामासुः । श्रीविद्याधिराजयतिवरेण्याः स्वनिर्याणकाले परमहंसाश्रमप्रदानपूर्वकं स्वशिष्यान् श्रीमत्कवीन्द्र-राजेन्द्रतीर्थान् श्रीमदाचार्यवेदान्तविद्यासाम्राज्यपरिपालने नियोजयामासुः । क्रिस्ताब्दीयषोडशतमे शतके श्रीकवीन्द्रतीर्थपरंपरायां श्रीसुरेन्द्रतीर्थाः, श्रीराजेन्द्रतीर्थपरंपरायां श्रीव्यासराजतीर्थाश्च श्रीमद्वैदिकसद्वैष्णवसिद्धान्तप्रतिष्ठापनमनवरतमाचरन्तः श्रीमन्मध्वविद्यासाम्राज्यसिंहासने विलेसुः ।

## ग्रन्थकर्तृपरिचयः

ततो गच्छति काले, सकलकलाभिज्ञाः श्रीव्यासराजगुरुसार्वभौमाः न केवलं वेदान्तसाम्राज्याधिपत्यम्, अपिच विजयनगरसंस्थानाधिपत्य, राजगुरुपदञ्च निर्वहन्तो व्यराजन्त* । कदाचिन्महामहिमशालिनः श्रीमन्मध्वाचार्याणां महासंस्थानाधिपतयः मानसपूजाधुरन्धराः श्रीमन्मूलरामार्चनोपार्जित विशिष्टवैभवाः श्रीमत्सुरेन्द्रतीर्थपूज्यचरणाः स्वपूर्वाश्रमबन्धून्-सुहृन्मणीनिमान्

* *See Introduction of* Mr B. Venkoba Rao, B A ,M.C.S , in the "Vyasa Yogi Charitham" written by Mahakavi Somanatha.

श्रीव्यासराजगुरुसार्वभौमान् दिदृक्षवः विजयनगरमीयुः । कर्णाटकसाम्राज्याधीश्वरः कृष्णदेवरायसार्वभौमः स्वगुर्वाज्ञानुसारेण श्रीसुरेन्द्रतीर्थान् राजगौरवपुरस्सरमसेवत । तदानीं श्रीमच्चन्द्रिकाचार्याणां (श्रीव्यासराजयतीश्वराणां) बहुष्वन्तेवासिषु प्रचुरप्रभावशालिनं वर्चोविशेषविभूषितवपुषं तस्मादेव गुरोर्लब्धतुरीयाश्रमं विष्णुतीर्थनामानं विष्णुभक्तप्रवर्हं च सन्ददृशुः । एतेषां श्रीसुरेन्द्रतीर्थानां विषये भूयः प्रदर्शितस्नेहातिशयाः श्रीव्यासराजव्रतीन्द्राः स्ववयस्यानमूल्येन केनचित्पारितोषिकेण सन्तोषयितुमभिलषन्तस्तदर्थमेव परिपालितं स्वप्रीतिपात्रममुं विष्णुतीर्थं तेषां करे समर्प्यामन्दमानन्दमविन्दन् [1]। स्वीकृत्य च विष्णुतीर्थं श्रीसुरेन्द्रतीर्थश्रीपादास्तं दण्डपरिवर्तनगुरूपदेशमन्त्रमुद्राप्रदानपूर्वकं "श्रीविजयीन्द्रतीर्थ" इति नवेन नामधेयेन विभूष्य स्वकरार्च्यमानाः श्रीमन्मूलदिग्विजय-जयरामादिप्रतिमाः अप्रतिममहामन्त्रांश्चास्मै अनुगृह्य तं निजे वेदान्तसाम्राज्यमहापीठेऽभ्यषिञ्चन् । एष एव यतीन्द्रो विजयीन्द्रतीर्थ इति प्रथितनामाऽस्माकमेतद्वचोविचारगोचरः कथानायकः[2] ॥

---

1 विष्णुतीर्थकरं गृह्य सुरेन्द्रस्य करे ददौ । ददामि मत्सुतं तुभ्यं स्वीकुरुष्व यतिव्रत ॥ परिपालय त्वं हंस स्वदर्थं स्थापितो मया । शिष्येष्वेतेषु सर्वेषु नानेन सदृशो मम ॥ इत्युक्त्वा प्रददौ व्यासः सुरेन्द्राय सुतं मुदा ॥

—"श्रीविजयीन्द्रविजयः"

(वादिराजयतिवरशिष्यमध्वकविरचितः)

2 गृहीत्वा तं मुनिं हंसो विष्णुतीर्थं सुरेन्द्रकः ।
सुरेन्द्रस्तस्य प्रददौ भिक्षोर्दण्डकमण्डलुम् ॥
दत्वा श्रीमूलरामार्चां विद्याराज्येऽभिषिच्य तम् ।
मन्त्रं दत्वा स्ववंशस्य कर्तारं कृतवान् मुनिः ॥
अथासौ विष्णुतीर्थश्च विजयीन्द्रेति विश्रुतः ।

—"श्रीविजयीन्द्रविजयः"

अमीषां श्रीमद्विजयीन्द्रतीर्थश्रीपादानां कालः क्रिस्ताब्दीय १५१७ तमसंवत्सरमारभ्य १६१४ तमसंवत्सरपर्यन्तमिति आधुनिकानां बहूनां ऐतिहासिकविमर्शकानां विवादविवर्जितो निर्णयः । एतान् क्रिस्ताब्दीय १५३० तमे वत्सरे श्रीसुरेन्द्रतीर्थाः श्रीमन्मध्वाचार्याणां सत्पारम्पर्यागते वेदान्तसाम्राज्योपरञ्जिते स्वपीठेऽभ्यषिञ्चन् । तावत्पर्यन्तं श्रीमद्व्यासराजतीर्थानां निकट एव कृतवसतयः इमे समग्राणि शास्त्राणि चतुष्षष्टिकलाश्च साकल्येन सञ्जगृहुः[1] ।

श्रीमद्विजयीन्द्रतीर्थश्रीपादाः निजायुषः भूयांसं भागं निरवद्यविवेकसद्मायमाने कुम्भकोणाभिधाने नगरवर एवानैषुः । तत्र च स्वीयविद्यावैभवेन सर्वानपि वैदिकमतानुयायिनः पण्डितप्रकाण्डान् मुमुक्षून् विजित्य तान् सर्वान् शैवान् कुर्वन्तं शैवसन्यासिनं (शैवमठाधिपतिं) पणबन्धपूर्वकं एकादशदिनपर्यन्तं वादवैखरीभरेण पराजित्य तत्स्वायत्तीकृतसर्वस्वाः व्यराजन्त[2] । तदद्यापि विद्योतते ॥ (*Mysore Arch-Report-1944* P. 103 Inscription No. 25.)

---

1 षड्वारं व्यासराजेन्दुमुखाच्छ्रुत्वा विशेषतः ।
मध्वशास्त्रार्थसारन्तु व्याचक्षाणं निजान्प्रति ॥
नवकृत्वो न्यायसुधां व्यासतीर्थपयोनिधेः ।
उध्दृत्य पीतवन्तं च नाकीन्द्रमिवसन्नुतम् ॥

–श्रीविजयीन्द्रस्तोत्रम्– ३-४

(स्तोत्रमहोदधिः–पृ २९२)

2 क) स कोणनिलये ग्रावग्रीवं जिगाय च ।
तन्मठे ग्रावनिचये वासं तत्र चकार सः ॥

–"विजयीन्द्रविजयः"

विजयाभिवृद्धिदत्तचित्तैः श्रीमद्विजयीन्द्रतीर्थपूज्यपादैस्तदा तदा विजयनगरादिविविधनगरीषु दिग्विजययात्राऽकारि । तत्रत्याः विपश्चिदपश्चिमाः प्रतिवादिनो निश्शेषमजेजीयन्त[1] । ततश्च, तत्रत्यैः तदानीन्तनैरवनीश्वैररनितरसुलभबहुमानवितरणपुरस्सरमेते आद्रियन्ते.ख ।

एवं चतुष्षष्टिकलाकलापकौशलेन वादविद्यावैभवेन सर्वतन्त्रस्वातन्त्र्येण च विलसतां श्रीमद्विजयीन्द्रगुरुसार्वभौमानां कीर्तिरासेतुहिमालयं सर्वा आशा अवरुध्य विरेजे । तदा तदाकृष्टहृदयास्सहृदयाः बहवः शास्त्रितल्लजा, कविपुङ्गवाः, शैवाद्वैतादिपराद्धान्तविदग्धाः तद्दर्शनाय परीक्षणाय पराजयायचाहमहमिकयाऽभ्यधावन् । तेषु प्रधानतया गण्यन्ते श्रीमदप्पय्यदीक्षितेन्द्रताताचार्य-भट्टोजिदीक्षिताः । भट्टोजिदीक्षिताः एतेषां व्याकरणनैपुण्यमुपवर्ण्या-

---

ख] जित्वा वादे वीरशैवगुरुं विस्तृततन्मठम् ।
अपहृत्येह संवासं कृतवन्तं सतां हितम् ॥
—"विजयीन्द्रस्तोत्रम्"

ग] Aravidu Dynasty of Vijayanagaram P. 552

घ] Epigraphica Indica Vol. XIII. P. 346.

च] श्रीमद्विजयीन्द्रतीर्था इमे वादे विजित्य शैवगुरुं तत्स्वाधीनवृत्तिकुम्भकोणीयसर्वदेवालयाधिपत्यं जगृहुरिति श्रीकुंभेश्वरदेवालये मण्डपस्तंभोपरिगते एकस्मिन्दीर्घशिलावितानेउत्कृष्यमाणदिलशासनादप्ययं वृत्तान्तोऽवगम्यत इति शृणुमः ।

1 चचार पृथिवीं सर्वां सिंहः क्षुद्रमृगेष्विव ।
शास्त्रज्ञा मूकतां प्राप्ताः जयीन्द्रपुरतस्तदा ॥

गण्यमानन्दमभजन् । श्रीताताचार्या एतेषां सुहृदएवावर्तन्त ।[1] अन्ये वेदान्तिनो व्रीडाधरितमुखाः पलायन्त । तदीयकविता माधुरीणाः गीर्वाणगिरोऽवधार्य कविमणयः तदैव स्वाभिमानं तत्यजुः ॥

तर्कविदग्धाः तदीयवादवातोपसेवितेन तर्कतीव्रानलेन विशेषतो दग्धा एव । का कथाऽन्येषां तदानींतनानां पण्डितं मन्यानाम् ? । असकृदधरीकृतचातुरीका अप्पय्यदीक्षिता एतेषां परम सुहृदएवावर्तन्त । तत्कृतानामद्वैतराद्धान्तानुरोधिनां नैकप्रबन्धानां खण्डनाय एतेऽपि चतुरधिकशतप्रबन्धप्रवरानरचन्[2] । किञ्च इमे न केवलं सर्वशास्त्रविशारदाः, अपि तु सङ्गीतशिल्पादि चतुष्षष्टिकलास्वपि कुशलतरा व्यलसन्[3] । सकलकलाकोविदानखिलान्प्रत्यर्थिपंडितधूर्वहान्विजित्य श्रीविजयीन्द्रयतिशेखरा अनितरसाधारणी

---

ब्राह्मणानजयत्सर्वांस्तर्कमीमांसवादकान् ।
दैवज्ञान्भिषजो भट्टान्मायिनश्शास्त्रपारगान् ॥
ये ये जना वेदविद्यास्ते ते तेन विनिर्जिताः ।
सर्वान्विजित्य सर्वत्र चचार पन्नगो यथा ॥

—"विजयीन्द्रविजयः"

2 क) चकारबहुसंख्याकान्ग्रन्थानप्पय्यदीक्षितः ।
तान् जिगाय यतिश्रेष्ठः स्वयं ग्रन्थान् चकार ह ॥
वातार्थभेदतत्त्वार्थपूर्णान्सर्वत्र विश्रुतान् ।
विजयीन्द्रकृतैर्ग्रन्थैस्तद्ग्रन्थास्ते निराकृताः ॥

—"विजयीन्द्रविजयः"

ख) दुर्वाद्यप्पय्यरचितग्रन्थारण्यविनष्टये ।
चतुस्संख्याधिकशतग्रन्थादीनां प्रचोदकम् ॥

—"विजयीन्द्रस्तोत्रम्"

3 स्फुटविदितचतुष्षष्टिविद्याविशेषः । —गुरुगुणस्तवनम्

श्रीविजयीन्द्राप्पय्यदीक्षितयोः कालदेशसामानाधिकरण्यम्

यच्च कैश्चिदाधुनिकैर्विमर्शकंमन्यैः पूर्वग्रहगृहीतात्मभिः वेदान्तविद्याविशारदैरुक्तं श्रीविजयीन्द्रतीर्थाप्पय्यदीक्षितयोः कालदेशसामानाधिकरण्यं नासीदिति तत्सर्वथाऽऽग्रहमात्रकथितमिति सप्रमाणं निरूपयितुं प्रभवामः ।

---

ख) शिष्यः श्रीविजयीन्द्रसंयमिमणेः षड्दर्शिनीदर्शिनः
तत्कारुण्यसमेधिताखिलकलोः स्वर्पस्सुधीन्द्रो यतिः ।
निर्मात्सर्यगुणोल्लसत्सुमनसां मोदाय लक्ष्मीपतेः
प्रीत्यै मध्वमुनीशितुर्वितनुते सद्युक्तिरत्नाकरम् ॥

—तर्कताण्डवव्याख्यानम्

ख) चतुष्षष्टिकलाविद्यापूर्णोऽयमिति वन्दिभिः ।
राजमार्गे घोष्यमाणं श्रीमध्वमतवर्धनम् ॥

—श्रीविजयीन्द्रस्तोत्रम्

ग) चतुष्षष्टिकलाविद्याजुषे विद्वन्महोमुषे ।
जयीन्द्रज्योतिषे कुर्यां वन्दनानि यशोजुषे ॥

—श्रीराघवेंद्रविजयकाव्यम्

1 दर्शयामास विद्याश्च नानाकारा यतीश्वरः ।
चर्म (स्वर्ण) कारानयनयन् कुम्भकारांश्च नापिता (का) न् ॥
गायकान्गाननिपुणान्वादकान्वाद्यसेवितान् ।
पुलिन्दान् सूत्रकर्मज्ञान् लोहकर्मविशारदान् ॥
नानाक्रीडापरानन्यान् वंशस्तम्भवरानथ ।
सर्पक्रीडनकानन्यान् जिगाय परविद्यया ॥
असंख्याता जिता वादयुध्दे वै बहु शत्रवः ॥

—श्रीविजयींद्रविजयः

1 तञ्जापुरसंस्थानाधीश्वरः चव्वप्पनायकः (1580-A.D.) श्रीविजयीन्द्रतीर्थेभ्यः ग्राममेकमदादिति क्रिस्ताब्दीय १९१७ तम संवत्सरीय मैसूरशासनविभागनिवेदनग्रन्थे प्रतिपादितम् ।* तत्र च—

"त्रेताग्नय इव स्पष्टं विजयीन्द्रयतीश्वरः ।
ताताचार्यो वैष्णवाग्र्यो सर्वशास्त्रविशारदः ॥
शैवाद्वैतैकसाम्राज्यः श्रीमानप्पय्यदीक्षितः ।
यत्सभायां मतं स्वं स्वं स्थापयन्तः स्थितास्त्रयः" इति

एतेन विजयीन्द्राप्पय्यदीक्षितयोः कालदेशसामानाधिकरण्यमासीदिति समर्थितं भवति ।

2 तञ्जापुरवराधीश्वरः शेवप्प (चेव्वप्प) नायकः क्रिस्ताब्दीये १५७७ तमे संवत्सरे श्रीविजयीन्द्रतीर्थेभ्यः "अरविलिमङ्गला"ख्यग्रामं समार्पयदिति भारतदेशीयराजकीयेतिहासग्रन्थे (Epigraphica Indica) द्वादशतमे सम्पुटे लेखो दृश्यते । तत्रापि विजयीन्द्रतीर्थानां कालः समर्थितः ।‡

3 किञ्च, विजयनगराधीश्वरः "अळिय" रामराजमहीपतिरपि (1542-66 A.D.) स्वामिपेकादिना विजयीन्द्रतीर्थानसेवतेति श्रीराघवेन्द्रविजयमहाकाव्ये वर्णितम् ।† रामराजसमकालिकत्वसमर्थनेन विजयीन्द्राप्पय्यदीक्षिताः समकालिका इति निश्चप्रचम् ।

---

* a) Mysore Archaelogical Report—1917.
b) " " —1944.
c) Inscription of Madras Precidency.

‡ a) Epigraphica Indica Vol. XII—1943-44.
—The Arivilimangalam Plates of Sivappa Nayaka, Edited by Sri T. A. Gopinatha Rao.

† a) विद्वद्वरोऽसद्विजयीन्द्रयोगी विद्यासु हृद्यास्वतुलप्रभावः ।

4 एवं विजयनगरीयकर्णाटकसाम्राज्याधीशः श्रीरङ्गराजचक्रेश्वरः क्रिस्ताब्दीय १५७४तमे संवत्सरे चव्वप्पमहीपतिप्रार्थनानुसारेण राजकुमारेण अच्युतप्पनायकेन पूर्वमेवप्रदत्तं "अरविलिमंगला"ख्यं (अच्युतप्पसमुद्राख्यं) ग्रामं पुनरपि विजयीन्द्रतीर्थेभ्यः ताम्रशासनद्वारा समर्पयामास ।‡ श्रीरङ्गराज (1572-1586) A.P ) समकालिकत्वसमर्थनेन विजयीन्द्राप्पय्यदीक्षिताः समकालिका एवेति निर्णीयते ।

5 तञ्जापुराधीशस्य चव्यप्पनायकस्य सहोदरः चिन्नचव्यप्पनायकः श्रीशालिवाहनशके १५३६ तमे आनन्दनामवत्सरे चैत्रशुक्लश्रीरामनवमी दिने (9-6-1614) कुम्भकोणक्षेत्रे श्रीविजयीन्द्रतीर्थेभ्यः भूमिं-वनं च समर्पयामास । चिन्नचव्यप्पसमर्पितताम्रशासनेन श्रीविजयीन्द्रयतीन्द्राः क्रिस्ताब्दीय १६१४ तमवत्सरपर्यन्तमजीवन्निति सिध्यति ।*

---

रत्नाभिषेकं किल रामरजात्प्राप्याग्र्यलक्ष्मीनकृताग्रहारान् ॥

—श्रीराघवेंद्रविजयकाव्यम्

b) Sources of Vijayanagaram History.
c) Aravidu Dynasty of Vijayanagaram—Herus.
d) EP. Indica.

‡ a) Epigraphica Indica vol.XII—1913-14.
—Arivilimangalam Plates of Srirangaraju I.
b) Inscription of Madras Presidency.
c) Mysore Arch-Report—1944.
d) The Aravidu Dynasty of Vijayanagaram.

"In 1574, at the request of Sivappa Naika, Ranga I granted the village of "Arivilimangalam" to Madhva Guru Vijiyendra Tirtha. The grant had been made by Prince Achyuta, but now the formal sanction from Vijayanagara Emperor was obtained. P. 287.

*i. Mysore Archaelogical Report 1944. P. 121.
—Inscription No. 27.
ii. Mysore Arch. Report 1944. P. 127. Inscription No. 28.

6 कर्णाटकसाम्राज्याधीशः वीरवेङ्कटपतिरायमहीपालः (1586 1614 AD) श्रीमदप्पय्यदीक्षितेभ्यः ग्राममेकं प्रदत्तवानिति महिशूरदेशीय शासनविद्याविभागप्रकटितताम्रशासनादवगम्यते[1] । तेन अप्पय्यदीक्षिताः क्रिस्ताब्दीय १६०० तमसंवत्सरपर्यन्तमजीवन्निति सिध्यति ।

7 वेल्लूरुप्रान्तस्य अडियप्पाळ्याख्यग्रामस्य श्रीकलकण्ठेश्वर देवालये विद्यमानशिलाशासनानुसारेण[2] श्रीमदप्पय्यदीक्षितेन्द्राः क्रिस्ताब्दीय १५८० तमसंवत्सरपर्यंतमजीवन्नित्यवगम्यते ।

8 किञ्च, श्रीविजयीन्द्राप्पय्यदीक्षितयोर्ग्रन्थादिषु परस्परवाक्योद्धरणपूर्वकं खण्डनं परिदृश्यते । श्रीराघवेन्द्रस्वामिनां मठे विद्यमाननैकताम्रशासनद्वारा श्रीविजयीन्द्रतीर्थानां कालः क्रिस्ताब्दीय १५१७ तमसंवत्सरमारभ्य १६१४ तम संवत्सरपर्यन्तमिति निश्चीयते ।

एवञ्च भारतदेशीयराजकीयेतिहासग्रन्थ (Epigraphica Indica) महीशूरदेशीयराजकीयशासननिवेदनग्रन्थ (Mysore Archaclogical Report) मद्रदेशीयराजकीयशासननिवेदनग्रन्थ (Madras Archaclogical Report) अन्यराजकीयप्रमाणग्रन्थ – शिलाशासन – ताम्रशासन – श्रीराघवेन्द्रस्वामिमठीयेतिहासनिरूपणपरग्रन्थ – दानशासनादिभिः श्रीमद्विजयीन्द्रतीर्थानां कालः क्रिस्ताब्दीय १५१७-१६१४ इति निश्चिनुमः। कलकण्ठेश्वरदेवालयस्थशिलाशासनानुसारेण श्रीमदप्पय्यदीक्षिताः क्रिस्ताब्दीय १५८० तमसंवत्सरपर्यन्तमजीवन्नित्यत्र न कापि संशीतिः । एतेन श्रीविजयीन्द्रतीर्थाप्पय्यदीक्षिताः समकालिका एव इति सिद्धम् । एतयोः कालदेशसामानाधिकरण्यं नासीदिति यदुक्तं विमर्शकंमन्यैस्तत्सर्वथा आग्रहमात्रकथितमनृतमिति सर्वमकलङ्कम् ॥

---

1. Mysore Archaelogical Report—1944. Inscription No. 26.
2. No. 395 of 1911. For Remarks See also Mr. Y. Mahalinga Shastri's Paper on the date of Appayya Dikshita, J. O. R. Madras, 1929, P. 140-160.

क्रिस्ताब्दीयषोडशतमे शतके द्वैताद्वैतविशिष्टाद्वैतसिद्धान्तप्रवर्तकाः, षड्दर्शनाचार्याः वेदवेदाङ्गपारङ्गताः पण्डितप्रकाण्डाः नैके कविमणयश्च श्रीविजयीन्द्रतीर्थसमकालिकाः दक्षिणभारते विलसन्तिस्म । तेषु प्रधानतया-गण्यन्ते – श्रीनृसिंहाश्रममुनि – अप्पय्यदीक्षित–ताताचार्य – भट्टोजिदीक्षित–श्रीवादिराजतीर्थ–श्रीरघूत्तमतीर्थ– आनन्दभट्टारक – नारायणयति – गोविन्द-वडेयर–वल्लभाचार्य–मधुसूदनसरस्वती–लिङ्गराजेन्द्र-यम्मे बसवेन्द्र–पक्षधरमिश्र सोमनाथ–गुणसूरि–तरङ्गिणीरामाचार्य – रत्नखेटदीक्षित — श्रीनिवासतीर्थ— कृष्णभट्ट—कृष्णाध्वरीन्द्र—तिम्मण्णभट्ट—वेङ्कटताताचार्यप्रभृतयः

## राजसम्मानम्

श्रीमद्विजयीन्द्रयतीन्द्राणां सर्वतन्त्रस्वतन्त्रतां, सिद्धान्तस्थापनविचक्षणतां, वादकुशलतां, ग्रन्थप्रणयनचातुरीं, ज्ञान-भक्ति-वैराग्य-तपो-महिमादिकंच समवलोक्य प्रहृष्टान्तरङ्गास्तदानीन्तना नैके अवनीश्वराः विजयीन्द्रगुरुचरणान् इमान् रत्नाभिषेक-कनकाभिषेकं ग्रामभूमि-धनकनकाभरणसमर्पणपूर्वकं सभक्ति-श्रद्धं संसेव्य तदनुग्रहभाजनान्यभूवन् । तेष्विमे प्रधानतया गण्यन्ते :—

1 कर्णाटकरमारमणः विजयनगरीयसाम्राज्याधीशः कृष्णदेवराय-सार्वभौमः स्वगुरुश्रीमद्व्यासराजगुरुसार्वभौमानां प्रियशिष्यान् श्रीविजयीन्द्रगुरु-चरणान् क्रिस्ताब्दीय १५३० तमे संवत्सरे ग्रामभूमि धनकनकाभरणसमर्पण-पूर्वकं समक्तिप्रकर्षमसेवत ।

2 विजयनगरीयसाम्राज्यधुरंधरः "अळिय" रामराजमहीपालः स्वगुरुवरानिमान् भद्रपीठेऽलंकृत्य रत्नाभिषेकं विधाय ग्रामदानपूर्वकमनितर-साधारणेन गौरवेण असेवत ।[1]

---

1 (i) विद्वद्वरोऽस्मद्विजयीन्द्रयोगी विद्यासुद्दयास्तुलप्रभावः ।

3 तञ्जापुरराज्यपालः शिवप्पनायकः (चव्वप्पनायकः) श्रीविजयीन्द्रगुरुपादेभ्यः सगौरवं ग्रामचतुष्टयं समार्पयत् ।[2]

4 तञ्जापुरयुवराजः अच्युतप्पनायकः सुमिश्रं संवृद्धरितं "अच्युतप्पसमुद्राख्यं" ग्रामवरं सहिरण्योदकधारापूर्वकं समर्प्य गुरुवरानसेवत ।[3]

5 कर्णाटकचक्रेश्वरः श्रीरङ्गराजमहीपतिः क्रिस्ताब्दीय १५७६ तमे संवत्सरे 'अरविलिमङ्गलाख्यं' ग्राममेकं सरत्नाभरणं समर्प्य गुरुवरेभ्यः कृतार्थो बभूव ।[4]

6 श्रीशालिवाहनशके १५३६ तमे आनन्दनामसंवत्सरे चैत्रशुक्लनवमीसौम्यवासरे (9-3-1614) तंजापुरराज्यनिर्वाहकः चिन्नचव्वप्पमहीपालः भूम्यारामकनकाभरणादिप्रदानपुरस्सरं श्रीविजयीन्द्रपूज्यचरणानसेवत ।[5]

---

रत्नाभिषेकं किल रामराजात् प्राप्याग्र्यलक्ष्मीनकृताग्रहारान् ॥
—श्रीराघवेन्द्रविजयकाव्यम्

(ii) Epigraphica Indica.
(iii) Aravidu Dynasty of Vijayanagaram.
(iv) Sources of Vijayanagaram History.

2 (i) Epigraphica Indica-Vol. XII.
(ii) Mysore Archaelogical Report - 1944. Inscription No 26 P. 113.

3 (i) Epigraphica Indica—Vol: XIII
(ii) Mysore Arch. Report 1947.

4 (i) Epigraphica Indica—Vol XII 1943-44. P. 358.
(ii) Aravidu Dynasty of Vijayanagaram, P. 287.
(iii) Inscriptions of Madras Presidency.
(iv) Mysore Arch Report—1944.

5 (i) Mysore Arch. Report—1944. P. 121. Inscription No. 27.
(ii) Mysore Arch Report—1944. P. 127. Inscription No 28.

एवं विश्वनाथनायक—उदयमार्ताण्डवर्मा—रघुनाथभूपाल — सूरप्प-नायक—वेंकटप्पनायक—देवराज—नञ्जराज—इम्मडिरामराजनायकप्रमुखा नैके तदानीन्तना अवनीश्वराः श्रीविजयीन्द्रतीर्थश्रीपादान् ग्रामभूमिरत्नाभरणादि समर्पणपूर्वकं सभक्तिप्रकर्षमसेवन्त ॥

## ग्रन्थरचना

श्रीमद्विजयीन्द्रतीर्थश्रीपादा इमे वेदान्त—पातञ्जल—गौतमीय-जैमिनीय-सिद्धान्तेषु वेद-वेदाङ्गेषु काव्य-नाटकालङ्कारादिसाहित्यशास्त्रेषु च शताधिकप्रबन्धप्रवरान् विरचय्य आविपालगोपालं विविधदेशीयैर्विबुधवरेण्यैश्च संस्तूयमानाः अकलङ्कितयशसा भारतभूमिं पवित्रीकुर्वन्तः षोडशतमे शतके भृशं शुशुभिरे ।

अमीषां गुरुवराणां ग्रन्थप्रणयनचातुरीं श्रीराघवेंद्रविजयकारा एवं उपवर्णयन्ति :—

> वाक्ये पदे पादविलोचनोक्तौ व्यासीयशास्त्रे च कृतान्प्रबन्धान् ।
> आस्तां बुधाः श्रोतुमशेषमेषामाख्यां समाख्याय यदि पण्डितोऽसौ ॥

श्रीमद्राघवेन्द्रगुरुवराणामुभयवंशाब्धिचन्द्रमसः श्रीमद्वादीन्द्रतीर्थपूज्यचरणास्तु स्वीयगुरुगुणस्तवनाख्यग्रन्थे श्रीमद्विजयीद्रतीर्थश्रीपादानां सर्वतन्त्रस्वातन्त्र्य - वाक्यार्थनैपुण्य - सिद्धान्तप्रतिष्ठापनसामर्थ्य - चतुःषष्टिकला-कौशल-ग्रन्थरचनाचातुर्यादिकं एवं वर्णयन्ति—

> "चातुर्यैकाकृतिर्यश्चतुरधिकशतग्रन्थरत्नप्रणेता
> धूतारातिप्रबन्धः स्फुटविदितचतुष्षष्टिविद्याविशेषः ।
> सोऽयं नःश्रीसुरेन्द्रव्रतिवरतनयोऽद्वैतशैवासहिष्णुः
> पुष्णातु श्रीजयीन्द्रस्त्रिभुवनविदितसर्वतन्त्रस्वतन्त्रः ॥

एतेन श्रीविजयीन्द्रतीर्थश्रीपादाः चतुरधिकशतप्रबन्धप्रणेतार इत्यवगम्यते ।

एतादृशमहिमशालिभिरमीभिः विरचितेषु भारतीयवैदिकवाङ्मयभण्डारालङ्कारभूतेषु शताधिकप्रौढप्रबन्धेषु नैके लुप्ताः, अन्ये अन्धकारकोणके तत्र तत्र निलीनाः धूलीधूसरिताङ्गाः, कीटनाशितमातृकाः प्राप्तात्यन्तदुरवस्थाः एतावत्ताकालेनाप्यप्रकाशिता अलक्षितरूपा वर्तन्त इत्यहो दौर्भाग्यं भारतीयानाम् ।

वयमिदानीं तत्र तत्र महीशूरु - मद्रास - तञ्जापुर - हैदराबाद्राज्येषु राजकीयप्राचीनलिखितग्रन्थभाण्डारेषु, श्रीराघवेन्द्रस्वामिमठीयग्रन्थभण्डारे श्रीपरिमलसंशोधनप्रकाशनमन्दिरस्य श्रीसुमति–सुयमीन्द्र ग्रन्थभाण्डारे, इतर माध्वमठीयग्रन्थभण्डारेषु, श्रीराघवेन्द्रस्वामिनां पूर्वाश्रमवंशीयानां गृहस्थानां– ग्रन्थभण्डारेषु, इतरमाध्वविबुधवराणां ग्रन्थभण्डारेषु च विद्यमानानां श्रीविजयीन्द्रतीर्थविरचितग्रन्थानां नामान्यस्माभिस्संगृहीतान्यत्रनिरूपयितुमभिलषामः ।

## –* शास्त्रग्रन्थाः *–

१ ब्रह्मसूत्रभाष्यटीकाव्याख्या - तत्त्वमाणिक्यपेटी*
२ ब्रह्मसूत्रन्यायसंग्रहः*
३ नयमुकुरः*
४ नयमञ्जरी*
५ ब्रह्मसूत्राधिकरणमाला*
६ अधिकरणमाला*
७ अधिकरणरत्नमाला*
८ न्यायमौक्तिकमाला*
९ अद्वैतशिक्षा*
१० अप्पय्यकपोलचपेटिका*

---

* श्रीसुमतिसुयमीन्द्रग्रन्थभण्डारे विद्यमानग्रन्थः

११ तुरीयशिवखण्डनम्*
१२ भेदविद्याविलासः*
१३ मध्वसिद्धान्तसारोद्धारः*
१४ मध्वतन्त्रमुखभूषणम्*
१५ मध्वाध्वकण्टकोद्धारः*
१६ मीमांसानयकौमुदी*
१७ नयचम्पकमाला*
१८ शैवसर्वस्वखण्डनम्*
१९ वाग्वैखरी*
२० वादमालिका*
२१ न्यायाध्वदीपिका*
२२ श्रुतितात्पर्यकौमुदी*
२३ श्रुत्यर्थसारः*
२४ सर्वसिद्धान्तसारासारविवेकः
२५ न्यायामृतामोदः*
२६ न्यायामृतन्यायमाला*
२७ न्यायामृतजैमिनीयन्यायमाला*
२८ न्यायमाला*
२९ तात्पर्यचन्द्रिका*
३० चन्द्रिकोदाहृतन्यायविवरणम्
३१ तात्पर्यचन्द्रिकाभूषणम्
३२ तर्कताण्डवव्याख्या सद्युक्तिरत्नावलिः
३३ चक्रमीमांसा*

---

*श्रीसुमति--सुधर्मीन्द्रग्रन्थभण्डारेविद्यमानग्रन्थाः

३४ उपसंहारविजयः*

३५ नारायणशब्दार्थनिर्वचनम्*

३६ श्रीरामानुजमतरीत्यासूत्रार्थः (शारीरकमीमांसा)

३७ प्रमाणलक्षणटीकाव्याख्या*

३८ कथालक्षणटीकाव्याख्या*

३९ तत्त्वसंख्यानटीकाव्याख्या*

४० तत्त्वोद्योतटीकाव्याख्या गूढभावप्रकाशः*

४१ विष्णुतत्त्वनिर्णयटीकाव्याख्या*

४२ उपाधिखण्डनव्याख्या

४३ मायावादखण्डनव्याख्या

४४ मिथ्यात्वानुमानखण्डनव्याख्या

४५-४६ अवशिष्टप्रकरणव्याख्ये

४७ प्रमाणपद्धतिव्याख्या*

४८ कुचोद्यकुठारः

४९ भट्टोजिकुट्टनम्

५० अणुभाष्यव्याख्या

५१ पदार्थसंग्रहः

५२ प्रणवदर्पणखण्डनम्

५३ भेदचिन्तामणिः

५४ भेदप्रभा

५५ भेदागमसुधाकरः

५६ भेदसञ्जीविनी

५७ लिङ्गमूलान्वेषणविचारः

---

*श्रीसुमति–सुयमीन्द्रग्रन्थभण्डारे विद्यमानग्रन्थाः

५८ विरोधोद्धार

५९ विष्णुपारम्यम्

६० सन्मार्गदीपिका

६१ सिद्धान्तसारासारविवेचनम्

६२ न्यायामृतगुर्वामोद

६३ न्यायामृतमध्यमामोद

६४ गीतातात्पर्यव्याख्या

६५ भगवद्गीता याख्या

६६ गीताक्षरार्थ

६७ गीताभाष्यप्रमेयदीपिकाव्याख्या

६८ पिष्टपशुमीमांसा

६९ न्यायदीपिकाटिप्पणी

७० आनन्दतारतम्यवादार्थ

७१ कर्मनिर्णयव्याख्या

७२ न्यायसुधाव्याख्या–बिन्दु

७३ ८२ दशोपनिषद्भाष्यटीकाटिप्पण्य

८३ श्रवणविधिविलास

८४ पञ्चसंस्कारदीपिका

८५ परतत्वप्रकाशिका*

* काव्यनाटकादीनि *

८६ श्रीव्यासराजविजय

८७ सुभद्राधनञ्जय

८८ उभयमहाहृदय

---

* श्रीसुमति–सुधीन्द्रग्रन्थभण्डारेविद्यमानग्रन्था

## * स्तोत्राणि *

८९ दुरितापहारस्तोत्रम्

९० श्रीनृसिंहाष्टकम्

### अवतारपरिसमाप्तिः

श्रीमद्विजयीन्द्रतीर्थश्रीपादा इमे आसेतुहिमाचलं सुक्षेत्राण्यटित्वाऽन्ते कुम्भकोणक्षेत्रमासाद्य सुप्रसिद्धं विद्यापीठं संस्थाप्य तत्र वेदान्तविद्याप्रवचनप्रचारणादिस्वाश्रमोचितेन धर्म्यकर्मजातेन महान्तं कालं नयन्तः स्ववासेन सह्यजातीरस्याप्यपारं पावित्र्यमासादयामासुः ।

एवं साधुजनसमूहसेविताः विद्वगणवादतोषिताः भूमिपतिभिरादृताः शरणीकृतस्वचरणानां भक्तजनानामनिष्टनिवृत्तिमभीष्टसमृद्धिंच सानुकम्पमनुगृण्हन्तः सप्तनवतिवर्षाणि भारतभूमिं पर्यभूषयन् । अन्ते पूर्वमेव स्वगुरुभ्यः श्रीमत्सुरेन्द्रतीर्थपूज्यपादेभ्यः स्वीकृतवराश्रमान् स्वशिष्यान् वेदान्तविद्याविशारदान् षड्दर्शनाचार्यान्, चतुष्षष्टिकलाकोविदान् श्रीमत्सुधीन्द्रतीर्थश्रीपादान् स्वीयवेदान्तसाम्राज्यसिंहासने प्रतिष्ठाप्य श्रीशालिवाहनशके १५३६तमे आनन्दनामसंवत्सरे ज्येष्ठकृष्णत्रयोदश्यां स्थिरवासरे * कुम्भकोणनगर एव कवेरकन्यकाधन्वपयः पवित्रिते तटिनीतटे सुन्दरतमं महत् वृन्दावनं योगशक्त्या प्रविश्य उपविशन्तः जनतानयनात् तिरोऽभवन् ॥

श्रीमद्विजयीन्द्रगुरुशेखरा इदानीमपि स्वसमीपमासन्नानां विविधबाधावसन्नानां विषये प्रसन्ना भूत्वा तेषां दोषानशेषं नाशयन्ति । विना जातिमतवयोलिङ्गभेदं सर्वेऽप्यास्तिका नास्तिका अपि तदीयवृन्दावनं सकृदुपेत्य प्रदक्षिणनमस्कारादिना किञ्चिदुपचर्य इतरोपायदुरापा अप्यमिता अभीष्टसम्पदः प्राप्नुवन्तीति प्रत्यक्षमिदं पृथिवीजुषामित्यलंपल्लवितेन ॥

---

* क्रिस्ताब्दीय १६१४तमे संवत्सरे

## परतत्त्वप्रकाशिकापरिचयः

श्रीविजयीन्द्रतीर्थाः भेदविद्याविलास – उपसंहारविजय – मध्वाध्वकण्टकोद्धारादिग्रन्थप्रवरान् प्रणीय अद्वैतवादिनः विजित्य श्रीमध्वसिद्धान्तजयभेरीं व्यनादयन् । तत्समये शिवसर्वोत्तमत्ववादं श्रीकण्ठाचार्यसमुत्थापितमुपजीव्य प्रथितयशसः वैदिकंमन्याः षड्दर्शनीवल्लभाः पण्डितप्रकाण्डाः 'शाम्भवगणपारिषदाः भगवतो भवानीपतेरंशावतीर्णा' इति शैवैः बहुमानेन पूज्यमाना.' श्रीमध्वसिद्धान्तप्रतिपक्षिपक्षमालंब्य तत्खण्डनेन शैवमतप्रचारैकबद्धादरा अभूवन् । प्रत्यग्रं श्रीव्यासराजगुरुमार्यभौमैरुत्सारितान् दुर्वादानसहमाना इमे शैवाद्वैतिन भयान्निलीनमात्मान, कतिपयकालावधौ, प्रकटयामासुः, श्रीमध्वसिद्धान्तं निनिन्दु. गर्हयाञ्चकुश्च । परं तत्काले श्रीमद्व्यासयोगिविद्याशिष्येषु प्रधाना· श्रीविजयीन्द्रतीर्थाः प्रत्युत्पन्नमनीषिणः न्यायवेदान्तमीमांसादिसकलशास्त्रेषु अजय्यप्रसराः पण्डितदिग्गजा· स्वसिद्धान्तपरिपन्थिनो वादान् सपदि धिक् धिगिति दोषाविर्भावेणापसार्य द्वैतमतं सामोद घोषयाचक्रुः । श्रीमदप्पय्यदीक्षितग्रन्थाश्च व्युदासाचक्रिरे । उपक्रमपराक्रमस्य उपसंहारविजय इति भेदधिक्कारस्य (श्रीनृसिंहाश्रमसूरिविरचितस्य) भेदविद्याविलास इति मध्वतन्त्रमुखमर्दनस्य (दीक्षितविरचितस्य) मध्वाध्वकण्टकोद्धार इति शिवकर्णामृत–शिवतत्त्वविवेकयोः परतत्त्वप्रकाशिका इति झटिति दीक्षितप्रबन्धखण्डनग्रन्थाः श्रीविजयीन्द्रतीर्थविरचिताः तात्त्विकविज्ञानविग्रहरामस्यं समूचयन्ति ॥

अत्र प्रत्नागमुपचीयमाना परतत्त्वप्रकाशिका अणुरपिगात्रे शास्त्रविवेचने प्रगाढगाम्भीर्या मीमांसान्यायजटिला श्रीमदप्पय्यदीक्षितपाटवमदपाटने पर्याप्तप्रसरा वर्तते इति तन्निपठिपूणा मतिपथमारोहति ॥

श्रीमध्वसिद्धान्तखण्डने श्रीदीक्षितानां संभृतोऽसदाग्रहः तद्वचनैरेव उत्तानितो भवति ।

मध्वतन्त्रमुखमर्दनं मया यत्कृतं प्रकरणं मिताक्षरं ।
पद्यरूपमप्यतिस्फुटाशयं तत्सुखावगतये विविच्यते ॥
तथाप्यानन्दतीर्थीयं मतमग्राह्यमेव हि ।
यत्र वैदिकमर्यादा भूयस्याकुलतांगता ॥

—मध्वतन्त्रमुखमर्दनम्

तदीयशिवकर्णामृते, विष्णुसर्वोत्तमत्ववादिनः (माध्वाः) पाञ्चरात्रागमप्रामाण्य-मङ्गीकुर्वाणाः अवैदिका मूर्खाः इति तिरस्कृताः ।

सदाशिवः परंब्रह्म साम्बमूर्तिस्सनातनः ।
विभूतिलेशस्तस्यैव प्रपञ्च इति वैदिकाः ॥
पाञ्चरात्रस्थितास्तस्य परभावे घृणाक्षमाः ।
विष्णोः परत्वे वेदानामपि तात्पर्यमूचिरे ॥
सुधाऽऽरव्यं विहायान्यन्मूर्खतान्त्रिकजल्पितं ।
सङ्ग्रहेण निराकार्यं सारभूतमिहाखिलम् ॥

--शिवकर्णामृतम् P.I, P.18

आस्तुतावत् । नाऽयं प्रगल्भविद्याविदग्धानां हृद्यो मार्गः यत्प्रतिपक्षिकक्षे-तत्रापि मताचार्याणामुपरिविषोद्गिरणम् । 'प्रत्युत शेषं कोपेन पूरयेदि'ति न्यायेन स्वीयमतदौर्बल्यमेव उत्तानयति । तत्प्रकारस्तु परतत्त्वविमर्शेन श्रीविजयीन्द्र-तीर्थैर्यत्किञ्चिन्निरूपितः ।

श्रीमदप्पय्यदीक्षिताः कतिपयमीमांसान्यायानां विपरीतानुसन्धानेन उपनिषत्पुराणागमेभ्यः स्वसिद्धान्तमुद्घाटयन्ति । ब्रह्मविष्णुमहेश्वरेभ्योऽन्यः

तुरीयशिव एव जगत्कारणं तज्जन्या एव ब्रह्मादयः इति अपूर्वं मतं श्रुति, पुराणादिषु निगूढमिति भावयन्ति । अत्र तैः प्राधान्येन अथर्वशिरः-श्वेताश्वतरोपनिषत्, महोपनिषत्, लिङ्गपुराणवचनानि शैवागमाश्च विमर्शपथमानीताः । सर्गाद्यसमये को वा आसीत्—विष्णुः ब्रह्मा, शिवो वा ? तदन्यतमनिर्धारणेन जगत्कारणं निश्चेतुं शक्यते । यः सृष्ट्याद्यष्टकर्ता स एव परमात्मा उपासनया ज्ञातः मोक्षप्रदः परतत्त्वमिति निश्चप्रचम् । तदर्थं तैः ('कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये') इति अथर्वशिखावाक्ये भूयान् भरः समाहितः । यतोऽत्र शम्भुः सर्वथा परशिव एव भवितुमर्हति इति । इदं सिद्धवत्कृत्य तदुपष्टम्भकतया श्वेताश्वतरोपनिषत्, महोपनिषत्, सुबालोपनिषत्, नारायणोपनिषत्, मैत्रायणोपनिषत्, इत्याद्युपनिषदः, पुरुषसूक्तमन्त्रः, सर्वोऽपि वेदभागः, पुराणानि, आराधन-पूजादिकल्पग्रन्थवचनानि—इत्यादि प्रमाणान्युपन्यस्तानि । ईशानः ईश्वरः महेश्वरः तज्जातीयशब्दाः रूढ्या परशिवमेव बोधयन्तीति साधयितुं महान् आयासः स्वायत्तीकृतः । परं नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते इत्यादि बाधकवचनेषु सत्सु, रुद्रस्य परशिवस्य वा जगत्कारणत्वमुररीकर्तुं न शक्यते । आपाततः शिवपराणि वाक्यानि तदन्तर्यामिपरतया योजनीयानिति 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्, अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' इति अन्तर्यामिनयन्यायेन 'तत्तुसमन्वया'दिति सूत्रार्थशेषतया च इदं सिद्धान्तितम् । प्रसिद्धपुरुषसूक्तमपि वैदिकमर्यादामुल्लंघ्य शिवपरतया व्याख्यातं दीक्षितैः । नारायणपरं ब्रह्म इत्यत्र नारायणात्परं ब्रह्म इति विग्रहं प्रदर्श्य नारायणाद्भिन्नः परशिव एव ब्रह्मेति प्रजल्पितम् । 'तत्त्वं नारायणः परः' इत्यत्र परत्वं नारायणस्यैवेति दृढीकृत्यनिषादस्थपतिन्यायेन कर्मधारय एव साधुरिति साधितं विजयीन्द्रैः परतत्त्वप्रकाशिकायाम् । सर्वथा नारायणपराः सौवऊ नारायणाद्युपनिषदः 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधां' इत्युद्धोषयितृ अम्भृणीसूक्तं, 'सहस्रशीर्षापुरुषः सहस्राक्षः

सहस्रपात्' इति व्यावर्ण्यमानः पुरुषः नारायणादन्योऽपि पुरुषसूक्तं, रुद्रपरं इत्येवं प्रमाणजातं शिवपरत्वेन योजितम् । नारायणपरपुरुषसूक्तं 'उतामृतत्वस्येशान' इति ईशानपदप्रयोगमात्रेण रुद्रपरमिति कल्पनमति साहसम् । 'मध्येवामनमासीनम्' इति निरवकाशवामनशब्देन कठवल्लीस्थेशानशब्दः नारायणपरः इति 'शब्दादेवप्रमित.' इत्यत्र व्यवस्थापितम् । 'ईशानः प्राणदः प्राणः' इति विष्णुनामसहस्रे ईशानशब्द इममेवार्थं द्रढयति। परंदीक्षितवर्णनमवैदिकत्वान्नातिरिच्यते इति स्फुटम् ।

एवं तत्तदुपनिषत्सु प्रयुज्यमान पद-वाक्य-तत्तात्पर्यपर्यालोचनाया तत्तुसमन्वयादिति सूत्रार्थानुगुण्येन च ब्रह्म-सत्- आत्मादिसाधारणकारणशब्दाः छागपशुन्यायेन विष्णुपरा एवेति सुष्ठु सिद्धान्तितम् । अधिकं जिज्ञासवः परतत्त्वप्रकाशिकामवलोकयन्तु ॥

एवं श्रीमद्विजयीन्द्रतीर्थपूज्यचरणैरस्मिन्ग्रन्थे श्रीमदप्पय्यदीक्षितैरुक्तानि अनुक्तान्यप्यन्यानि प्रमाणानि परैरन्यथाव्याख्यातानि सुष्ठु विमृश्य लक्ष्मीपतिः श्रीनारायण एव जगत्सृष्ट्याद्यष्टकर्ता सर्वगुणपरिपूर्णः परतत्वमिति सिद्धान्तितम्॥

एतेन श्रीमत्पूर्णप्रमतिदेशिकसार्वभौमदर्शितशास्त्रसरणिं प्रपन्नैर्वैदिक विद्याचार्यैस्सर्वतन्त्रस्वतन्त्रैः श्रीमद्विजयींद्रतीर्थगुरुपादैर्यत्प्रतिपादितं परतत्त्वप्रकाशिकायां तदेव सकलश्रुतिस्मृतिपुराणेतिहासादिषु प्रतिपन्नं सत्तत्त्वमिति सर्वमनवद्यम् ॥

## ग्रन्थमातृकाः

१. मूलपुस्तकं तालपत्रात्मकम्—
२. 'क' पुस्तकं हस्तलिखितं पत्रात्मकम्
३. 'ख' " " "
४. 'ग' " " "
५. 'घ' " तालपत्रात्मकम्
६. 'च' " हस्तलिखितं पत्रात्मकम्

परतत्वप्रकाशिकासंशोधनेऽस्माकं पूर्वोक्तमातृकाषट्कमुपलब्धम् । अस्माभिस्तेषां प्रतिकृतीः निर्माय श्रीपरिमळसंशोधनप्रकाशनमंदिरवर्ति "श्री-सुमति–सुयमीन्द्रप्राक्तनग्रन्थभाण्डागारे" विद्यमानं तालपत्ररूपं नागरीलिपि-लिखितं मूलपुस्तकमवलंब्य "क–ख–ग–घ–च" ग्रन्थप्रतिकृतिसाहाय्येनै-तत्संशोधनकार्यं निरमायि ।

प्रतिलिपिकृतग्रन्थेषु श्रीमन्त्रालयक्षेत्रे 'विद्यारत्नं' आचार्य वेङ्कोबा-चार्याणाम् गृहे विद्यमानं हस्तलिखितं 'क' पुस्तकमेकम् । धारवाडनगरे निवृत्तकन्नडसंशोधनविभागाध्यक्षाणां (Retd. Director of Kannada Research Institute, Dharwar) 'विद्याभूषणं' राघवेन्द्राचार्य-पञ्चमुखी (Sri R. S. Panchamukhi, M.A.,) एं. ए. महोदयानां गृहे विद्यमानं हस्तलिखितं 'ख' पुस्तकमन्यत् । अपरञ्च धारवाडनगरे 'श्रीविद्या-धीशतीर्थप्राक्तनग्रन्थागाराध्यक्षाणां' प्रो॥ के. टि. पाण्डुरङ्गी, एम्. ए. (Prof. K. T. Pandurangi, M.A.,) महोदयानां गृहे विद्यमानं हस्त-लिखितं 'ग' पुस्तकम् । श्रीराघवेन्द्रस्वामिनां पूर्वाश्रमीयवंशोद्भवानां श्रीमतां पण्डित श्रीवेणुगोपालाचार्याणां गृहे वर्तमानप्राचीनग्रन्थागारे विद्यमाने ताल-पत्र–हस्तलिखिते 'घ–च' पुस्तके अन्ये । इमानि पुस्तकान्यस्मत्संशोधन-कार्ये महोपकारकाण्यभूवन् ।

## कृतज्ञतासमर्पणम्

एतस्य प्रबन्धस्य प्रकाशनार्थं धनसाहाय्यमाचरितवद्भ्य भारतसर्वकारीयशिक्षा – समाजाभ्युदयमन्त्रागाराधिकारिभ्य (The Ministry of Education and Social Welfare, Government of India) निरवधिकमाधमर्ण्यमनवरतमाश्रितास्स । तेभ्योऽस्मदीया पर सहस्रा सन्तु धन्यवादा ।

अस्मद्ग्रन्थसशोधनाय स्वगृहस्थप्राचीनग्रन्थाना प्रतिकृतिपुस्तकप्रदान पूर्वकं साहाय्यमाचरितवद्भ्य श्रीमद्भ्य पं ॥ श्रीवेणुगोपालाचार्येभ्य, आचार्यनागराजाचार्येभ्य, श्रीराघवेन्द्राचार्यपञ्चमुखीमहोदयेभ्य, प्रो ॥ विद्वद्भ्य के टि पाण्डुरङ्गी, एम्. ए महोदयेभ्यश्च सन्त्वास्माकीना कृतज्ञतासहकृता नैके प्रणामा ।

किञ्चैतद्ग्रन्थसशोधनविषये स्वकीय सर्वं कार्यमुपेक्ष्यापि महत्तर साहाय्य माचरितवद्भ्य 'विद्यारत्न, विद्याभूषणं, पण्डितराज इत्यादि बिरुदभाग्भ्य श्रीमद्भ्य आर्. एस् पञ्चमुखी, एम्. ए. महोदयेभ्य कृतज्ञतापूर्वकान् प्रणामान् समर्पयाम ।

नातिचिरेणैतद्ग्रन्थमुद्रापयितृभ्य श्रीपरिमलमुद्रणालयाधिकारिभ्य श्रीमद्भ्य हुलि वे पद्मनाभाचार्य बि. ई महोदयेभ्य आस्माकीनास्सन्तु हार्दिका. धन्यवादा ।

अयि भो सद्वैदिकमतप्रचारभूताशा महाशया, सकृत् पारायणमात्रेणै-हिकामुष्मिकफलप्रदस्यास्य प्रबन्धप्रवरस्य प्रकाशोऽप्यधुना विबुधजनसन्दोह-सन्तुष्टये सानन्द सोपस्कर क्रियत इति भवन्निकटे निवेदयितु सन्तोतुष्यामहे। अन्यच्च विषमतरेऽप्यस्मिन्काले प्रतिक्षणमापतन्तीष्वप्यन्तरायपरम्परासु समीर-समयसंवर्धनश्रद्धादारा वय श्रीमाधव-मध्व विजयीन्द्र-गुरुसार्वभौमप्रसादमवलम्ब्य,

तत्रभवतां समेषां विदुषां प्रोत्साहनं च प्रतीक्ष्य प्रतिमासं प्रत्यब्दं वा कथं कथमप्यमुद्रितानस्मत्प्राचीनाचार्यप्रणीतानमूल्यान्प्रबन्धानञ्जसा मुद्रयित्वा विबुधलोकोपकाराय प्रकाशयितुं कृतमतयस्स्मः ।

अन्तेऽस्य ग्रन्थस्य पठन-पाठनादिना सज्जनाः श्रीविजयीन्द्रतीर्थगुरुसार्वभौमपरमानुग्रहपात्रीभूता भवेयुरित्याशास्य 'विद्याऽऽत्मनि भिदाबोधः, स्वस्तिपन्थामनुचरेम' इत्युद्घोषणपूर्वकं विरमामः ॥

"जनुर्जनुरनारतं जगति चातुरी चातुरी
मतिर्मतिरखण्डिता सदसि मौखरी मौखरी ।
कृतिः कृतिरितो जनाः शृणुत पाण्डितीं पाण्डितीं
जयीन्द्रविजयीन्द्रसच्चरितवन्दिकर्मन्दिनाम् ॥"

'गोपुरदर्शिनी'
श्रीपरिमलसंशोधनप्रकाशनमन्दिरम्
नञ्जनगूडु

इति विद्वज्जनवशंवदः
"सरस्वतीकण्ठाभरणं-विद्यावाचस्पतिः"
"विद्यावैभवः-वेदान्तशिरोमणिः-कवितिलकः"
राजा. श्री. गुरुराजाचार्यः
सम्पादकः

॥ श्रीमन्मूलरामो विजयते तराम् ॥

॥ श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ॥

श्रीगुरुसार्वभौमः प्रसीदतु

श्रीगुरुभ्यो नमः हरिः ॐ

# परतत्त्वप्रकाशिका

जगद्गुरु

॥ श्रीमद्विजयीन्द्रतीर्थ श्रीपादविरचिता ॥

क्रोधोद्भूतसटाग्रशिथिलितनिगलत्तारकाहारहारी
नक्षत्रस्वच्छमुक्तावलिवलितनिघुल्ललसच्छायकायः ।
रक्षोरक्षो विनिर्यत्खानजनिघुसृणालेपजातावलेप
सोऽव्याद्वो व्याजसिंहो मिलितजयरमो वीरशृङ्गारधारी ॥ १ ॥

कल्याणगुणपूर्णाय वल्लभाय श्रियस्सदा ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ॥ २ ॥

तं पाणिपल्लवं बाहुशाखं सद्द्विजसेवितम् ।
विद्याहासलतापुष्पं मध्वकल्पतरुं भजे ॥ ३ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान्प्रयच्छति ।
सेवे तं जययोगीन्द्रं कामबाणोच्छिदं[1] सदा ॥ ४ ॥

---

[1] पाठान्तरम् "घ" तालपत्र — कामबाणच्छिद् सदा ।

श्रीमन्मध्वमताब्धीन्दु दुर्वादिफणिपक्षिपम् ।
ब्रह्मण्याख्यमुनेश्शिष्य व्यासदेशिकमाश्रये ॥ ५ ॥

मूकोपि वावदूकेन्द्रो जायते यदनुग्रहात् ।
श्रीसुरेन्द्रगुरोस्तस्य पादौ नत्वा गिर भजे ॥ ६ ॥

[1]विजयीन्द्रयतीन्द्रेण विद्वदानन्ददायिनी ।
तन्यते तत्त्वविद्रीत्या परतत्त्वप्रकाशिका ॥ ७ ॥

---

## ॥ पीठिका ॥

इह नित्यनिर्दोषतया सकलशिष्टै स्वीकृत—प्रमाणभावेषु वेदेषु— 'सदेव सौम्येदमग्र आसीत्', 'ब्रह्म वा इदमग्र आसीत्', 'आत्मा वा इदमेकएवाग्र आसीत्' इत्यादीनि जगत्कारण प्रतिपादन पराणि वाक्यानि तावच्छ्रूयन्ते । तथा—'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' इति । आत्मा वारे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य '। 'ब्रह्मविदाप्नोति परम्', 'तरति शोकमात्मवित्', 'तमेव विद्वानमृत इह भवति नान्य पन्था विद्यतेऽयनाय' इत्यादीनि तज्जिज्ञासा निधायकानि तज्ज्ञानस्य मोक्षोपायत्वप्रतिपादकानि तदितरज्ञानस्य तु तदभावप्रतिपादकानि च श्रूयन्ते ।

तत्र 'सर्वे वेदा यत्पदमामनन्ति' इत्यादि श्रुत्या सर्ववेदान्तप्रत्ययन्यायेन[2] च जगत्कारणपरसर्ववाक्यानां एकविषयत्वेऽऽवश्यके तत्रत्यस्य

---

[1] र पु पा. सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्य भिक्षुणा ।

[2] 'सर्ववेदान्त प्रत्यय 'न्याय — ब्र सू. ३-३-१.

सच्छब्दस्य बृहदबृहत्साधारणतया सामान्य शब्दत्वेन, ब्रह्मशब्दस्यापि जडाजड साधारण बृहदर्थतया साधारणत्वेन, आत्मशब्दस्यापि जीवात्म परमात्मार्थतया, सन्देहा[1]नापादिक विशेषानुपस्थापकतया साधारण शब्दत्वेन, तदाहु ॥ 'नैवेह किञ्चनाग्र आसीत्', 'अमूलमनाधारा इमा प्रजा प्रजायन्ते'। 'दिव्यो देव एको नारायण ', 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान ', 'देवाह वै स्वर्गलोकमगमन् ते देवा रुद्रमपृच्छन् को भवानिति सोऽब्रवीदहमेक प्रथममास (भूतस्य जात पतिरेक आसीत) वर्तामि च भविष्यामि च नान्य कश्चिन्मत्तो व्यतिरिक्त ', 'हिरण्यगर्भ समवर्तताग्रे' इत्यादि कारणवाक्यगतानामनन्यसाधारणचेतनविशेषवाचिना नारायणादि पदाना सत्वात् ॥ सत्सु च तेष्वनेकषु (नारायणे) साधारणसद्ब्रह्मादि-शब्दाना विशेषे पर्यवसानमपेक्षमाणानामपि एक विशेष पर्यवसानार्थं प्रवृत्तेन 'छागपशु'[2] न्यायेन नारायणादिशब्दिवानेकचेतनविशेषेषूपस्थितेषु सत्सु, तत्रैकस्मिन्नेव पर्यवसानस्यासम्भवात् प्रागुदाहृतकारणवाक्यगतसद्ब्रह्मात्मादि शब्दा कि नारायणमादाय पर्यवस्यन्ति, कि वा रुद्रमादाय आहोस्विद्धिरण्यगर्भमादायेति सन्देहे रुद्रनारायणहिरण्यगर्भेषु नारायणमेवादाय तेषा पर्यवसानस्य सिद्धये विचारोऽयमारभ्यते ॥

तत्र तावत्– 'यतो वा इमानि भूतानि जायन्ते', 'ॐ जन्माद्यस्य यत ॐ',[3] इति श्रुतिसूत्राभ्या व्यवस्थापित जगज्जन्मादिकारणत्वमेव मुमुक्षुज्ञेय परतत्त्वशब्दितस्य परब्रह्मणो असाधारणधर्मतया, मूर्धाभिषिक्तस्य श्वेतच्छत्रादिकमिव लक्षणम् ॥ 'नकिरिन्द्रत्व उत्तरो न ज्यायामस्ति वृत्रहन्',

---

1 पाठान्तरम् — "घ" शाला — सन्देहेन
2 'छागपशुन्याय' मी न्या ६ ८-९ ३०
3 'ॐ जन्माद्यस्य यत ॐ' सूत्रम् १-१-२.

'नकिरेवा यथात्वम्', 'ईशानमस्य जगतस्स्वर्दृशमीशानमिन्द्रतस्थुषः', नत्वावा अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते', यद्वा प्रवृद्धसत्वे ते विश्वस्यादीन्द्र उत्तरः', 'इन्द्रो यातोवसीतस्य राजा', 'त्वमग्ने इन्द्रो वृषभस्सतामसि। त्वमग्ने रुद्रो असुरो महोदिव.। विश्वेदेवा नमस्यन्', त्वामग्नेत्वतामसि तच्छिवासम्', 'अग्निर्मुखं प्रथमो देवाना', 'अग्निरग्रे प्रथमो देवतानाम्', 'सर्वादेवता., सूर्य आत्मा जगत स्तस्युषश्च', 'राजानौ वा एतौ देवताना यदग्नीषोमौ', 'चित्रं देवानाम्' 'हंसश्शुचिषत्', 'य इमा विश्वा भुवनानि जिह्व,' इत्यादि मन्त्रार्थवादैरुपवर्ण्यमानं वैभवान्तरन्तु देवतान्तराणामपि सचिवादीना करितुरगादिकमिव, साधारणमित्यविवादम्। तत्र यद्यप्युदाहृतेषु मन्त्रार्थवादवाक्येषु अन्येष्वप्यनुदाहृतेषु अनेकेषु तेषु विरुद्धार्थकपदासमभिव्याहृतपर्यायसामान्यविशेषशब्दोपस्थितार्थस्य तेन तेन वाक्येन जगज्जन्माधिकारणत्वादिरूपलक्षणवत्त्वप्रतिपादनस्याविरुद्धतया, तस्य मुमुक्षुज्ञेयपरतत्त्वरूपत्वे विवादाभावेन न विचारावसरः। तथाप्यपर्यायभूत नारायणेशानहिरण्यगर्भादिविरुद्धार्थकशब्दसमभिव्याहृतवाक्यगोचरा तत्तत्पदार्थीना भेदस्यौत्सर्गिकत्वेन 'एकमेवाद्वितीयं, न तत्समश्चाप्यधिकश्च दृश्यते' इत्यादिना एकव्यक्तित्वेन समाभ्यधिकरहितत्वेन च, स्वीकृते परतत्वे तद्भेदप्रसक्तौतल्लक्षणस्य अतिव्याप्ति शङ्कायां तत्परिहाराय तल्लक्षणवत्तया श्रुतौ रुद्र एवैकं परतत्वं' किंवा, तथाविधो नारायण एवैक.' आहोस्विद्धिरण्यगर्भादि स्तथेति विशये, तथाविधवाक्यानां तथाविधवस्तुन्येकस्मिन् साक्षात्परंपरया वा समन्वय सिद्धयेऽस्त्येव विचारावसरः। ततश्च विचारयितव्यमेव परतत्वम्॥ तथाचोक्तं भगवता वेदव्यासेन—' अथातो ब्रह्मजिज्ञासा[1] ' इति। यद्यपि गोपदार्थे जिज्ञासमानं प्रति सास्नादिमान्गौरिति

[1] 'ॐ अथातो ब्रह्मजिज्ञासा ॐ' सूत्रम् १–१–१.

लक्षणोक्तिनो लक्ष्यावधारणवन्मुमुक्षूपास्य परतत्त्वजिज्ञासुं प्रति 'यतो वा इमानि भूतानि जायन्ते' इत्यादि तल्लक्षणोक्तित एव लक्ष्यभूत परतत्त्वावधारणं सम्भवतीति, विचारानवसरतादवस्थ्यम् । शब्दतदुपजीविप्रमाणैक समधिगम्ये तस्मिन्शृङ्गग्राहिकया लक्षणवत्त्वप्रदर्शनासम्भवेन लक्षणोक्तित एव तदवधारणेऽवश्यकर्तव्ये प्रथमत एव तत्सम्भवाल्लक्षणान्तरोक्ति वैयर्थ्यम् । लक्षणान्तरोक्त्यैव तन्निर्णयाभ्युपगमे तादृशमेव किमिति प्रथमत इव ततोपि जिज्ञासाया अनिवृत्यापत्त्या तन्निवृत्त्यर्थं तत्रापि लक्षणान्तरोक्त्यनुसरणे तत्राप्येवमित्यनवस्था । लक्षणोक्तित्वाविशेषेण ततोप्यनिर्णयतादवस्थ्यञ्च । तथापि ब्रह्मरुद्रनारायणादिशब्दार्थाना श्रौत तत्तदसाधारणधर्मै सिद्धे परस्परभेदे, अनन्यसाधारण तत्तदर्थवाचिरुद्रहिरण्यगर्भादिशब्दसमभिव्याहृत वाक्यविशेषेषु जगत्कारणादिरूप परतत्त्वलक्षणप्रतीतेः । किंतल्लक्षणं, नीलपीतादि घटेषु पृथुबुध्नोदराकारत्ववत् रुद्रहिरण्यगर्भनारायणादिरूप चेतनविशेषेषु साधारणं किंवा तद्घटत्ववत्तेष्वेकस्यैव धर्म इति संशयसम्भवेनास्यैवैकस्य धर्म इति निर्णयाय, तत्तदर्थासाधारण शब्दवतां वाक्यानां तत्र समन्वयस्यावश्यकतया तस्य विचारं विनाऽसम्भवेन तदर्थमस्त्येव विचारावसरः ॥,

यद्यपि च वक्ष्यमाणतया 'नामानि विश्वानि न सन्ति लोके यदाविरासीदनृतस्य सर्वम्', 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ती' त्यादि' श्रुत्या विष्णोरन्यत्र नामाभावावेदनात्तस्यैव 'यं सर्वाणि नामान्याविशन्ती'ति सकलनाममुख्यार्थत्वावेदनाच्च ॥ कारणवाक्यगत[1] रुद्रहिरण्यगर्भादि नाम्नामपि नारायणशब्दस्येव नारायण एव मुख्यार्थ इति निर्णयसम्भवान्नतदर्थं विचार-आवश्यकः । तथापि 'नामानि विश्वाभि न सन्ति

1 "ख" तालपु.पा. कारणवाक्यगतत्वावेदनाच्च ॥

लोके यदाविरासीदनृतस्य सर्वं' मिति श्रुतिभागस्य 'नामरूपे व्याकरवाणि' 'नामरूपे व्याकरोत्' 'सर्वाणि रूपाणि विचिन्त्य धीरः', 'नामानिकृत्वा-मिवदन्यदास्ते' इत्यादि श्रुतिपर्यालोचनया प्राङ्नामरूपप्रपञ्चसृष्टेः लोक्यते आलोक्यत इति व्युत्पत्या 'लोकस्तु भुवने जन' इत्यादि कोशप्रसिध्या वा लोक-शब्दार्थे नामाभावप्रतिपादनपरतयाप्युपपत्तेः। 'नामानि सर्वाणि यमाविशन्ती' त्यादि श्रुति भागस्यापि, तद्गत सर्वशब्दस्य 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासा' वित्यादि वाक्यगत सर्वशब्दस्येव प्रकृत सर्वशब्दपरत्वमादायार्थवर्णनसम्भवात्। 'शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः। सम्सारवैद्य स्सर्वज्ञः परमात्मे-त्युदाहृतः। एतन्नामाष्टकं पुण्यं शिवस्याघविनाशनम्॥' इत्यादि वाक्य-पर्यालोचनया[1] च विष्णुशब्दस्य प्रसिद्धशिवपरत्वेन तत्समभिव्याहृतोदाहृत श्रुतेरपि प्रसिद्धशिवपरतयाप्युपपत्य (त्या) निर्णायकत्वासम्भवाच्च॥ किमियं श्रुति[2]र्विष्ण्वन्यस्य तत्तन्नाम प्रति मुख्यार्थत्वं निषेधति? कि वा प्राङ्नामप्रपञ्चसृष्टे र्लोके नामनामिभावाभावप्रतिपादनपरा, कि विष्णोरेव नाममात्रं प्रति मुख्यार्थत्व माह?। कि वा प्रकृततत्तन्नाम प्रति मुख्यार्थत्वमिति, विशये तदर्थ निर्णयायापि विचारस्यावश्यकत्वात् अस्त्येव सर्वत्र श्रुत्यर्थनिर्णये विचारावसर इति॥

ननु तथापि 'नामानि विश्वाभि न सन्ति लोके', 'नामानि सर्वाणि-यमाविशन्ती'ति श्रुतिभागद्वयमेव विचार्यं न सर्वकारणपरवाक्यम्। विचारित श्रुतिभागद्वयेनैव कारणपर[3]तद्वाग्गत रुद्रादिशब्दमुख्यार्थो विष्णुरेव नान्य इति निर्णयसम्भवादिति चेत्सत्यम्। 'तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुरिच्छेन्मुमुक्षु' रित्यादि श्रुत्या सर्ववेदाध्ययनवत्सर्ववेदविचारस्यापि विधा-

1 "घ" ताला.पु पा. शिवसहस्रनामपर्यालोचनया।

2 ताला.पु.पा. उपन्यस्य

3 "घ" ताला.पु.पा. तद्ध्रुति।

नादुपायस्योंपायान्तरादूपकत्वेन, उदाहृत श्रुति भागद्वयवत्तद्वाक्यविचारस्यापि निर्णयार्थमादर्तव्यत्वाच । तस्मादस्त्येव, सर्वकारणवाक्यविचारावसर इति ॥

॥ इति पीठिका ॥

---

इह केचिद्वैदिकं मन्याः[1] मुमुक्षुज्ञेयं परतत्वं रुद्ररूपमेवेत्यङ्गीकुर्वते । अन्ये तु हिरण्यगर्भइत्याचक्षते । श्रीमत्पूर्णप्रमतिदेशिकसार्वभौमदर्शित शास्त्र-सरणीं[2] प्रपन्नास्तु नारायण एव परं तत्त्वमित्याहुः ॥

तत्र रुद्र एव परं तत्त्वमित्यङ्गीकुर्वतामयमाशयः । 'सदेवसौम्येदमग्र आसीत्', 'ब्रह्म वा इदमग्र आसीत्', 'यतो वा इमानि भूतानि जायन्ते', 'आत्मा वा इदमेक एव अग्र आसीत्' इति छान्दोग्य वाजसनेय तैत्तिरीयादिषु कारणवाक्येषु सद्ब्रह्मादिशब्दैरुपस्थापितं जगत्कारणं 'सोकामयत बहुस्या प्रजायेयेति', 'तदैक्षत बहुस्यां प्रजायेये' त्यादि वाक्यपर्यालोचनया चेतनत्वेनावगतं परं तत्त्वं रुद्ररूपमेव । श्वेताश्वतरोपनिषदि जगत्कारणं ब्रह्म किं देवतारूपमित्यर्थकेन किं कारणं ब्रह्म कुतस्माज्जाता इत्यादि वाक्येन ब्रह्मवादिनामुदाहृत वाक्यपर्यालोचनया सद्वादिशब्दितं किञ्चिज्जगज्जन्मादि-कारण सर्वाधिष्ठातृभूतमस्तीत्येतावत्सामान्यतो निश्चितवतां तत्किंदेवतारूपमिति संशयं प्रदर्श्य तन्निरासाय तत्रैवोत्तरत्र 'सम्युक्तमेतत्क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीश' इति शिवासाधारणेशानाभिधान श्रुत्या तमुपक्रम्य मध्ये

---

1 "य" माला. पु.पा. रुद्र एवेत्यङ्गीकुर्वन्ति ॥

2 ,, सरणिं

3 ,, ,, महावादिभिः

'यदातमस्तं न दिवा न रात्रि न सन्नचासच्छिव एव केवलः ।' 'तदक्षरं तत्सवितु र्वरेण्यं प्रज्ञा च तस्मा त्प्रसृता पुराणी ।' इति मन्त्रेण शिवापर-नामकं रुद्ररूपमेव तदिति विशिष्याभिधानात् । तथा च सदादिसाधारण-शब्दानां विशेषे पर्यवसानमाकाङ्क्षमाणानां रुद्र एव पर्यवसानं सिध्यतीति ॥

ननु महोपनिषदि 'एको ह वै नारायण आसी' दित्येतद्वाक्योप-स्थापितं नारायणरूपमेव तदस्तु । शिवरूपमेव तदित्यत्र विशेषहेत्वभावादिति चेन्न ॥ ह वै शब्देनोपबन्धेनास्य वाक्यस्यानुवादतया स्वयं विशेषोपस्थापना-समर्थत्वात् । किञ्च 'तत. परं ब्रह्मपरं बृहन्तं यथा निकामं सर्वभूतेषुगूढम्[1] । विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति ॥', 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमस·परस्थात्', 'तमेवं विदित्वा[2]तिमृत्युमेति नान्यःपन्था विद्यतेऽयनाये 'ति श्वेताश्वतरवाक्यैरितरज्ञानस्य मोक्षोपायत्वं प्रतिषिध्य, शिव-ज्ञानस्यैव तत्त्वावेदनान्मोक्षोपायज्ञानगोचरस्यैव परतत्वरूपतया, शिवस्यैव तत्त्वं सिध्यति । एवञ्च 'हृत्पुण्डरीके विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम्' इत्यारभ्य 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशा-न्तम्[3] । ध्यात्वा मुनि र्गच्छती 'ति विचिन्त्यस्य वस्तुनोऽनन्यसाधारणोमासहा-यादि शब्दै र्मध्ये शिवत्वं निरूप्य 'ज्ञात्वा तं मृत्युमत्येति', 'नान्य.पन्था विमुक्तये' इति उक्तार्थसवादि कैवल्योपनिषद्वाक्यजातमप्यनुकूलितं भवति ॥

नचैवं[4] नारायणैकनिष्ठेन पुरुषसूक्तेन 'तमेवं विद्वानमृत इह भवति । नान्यःपन्था अयनाय विद्यत' इति नारायणेतरज्ञानस्य मुक्त्युपायत्वं प्रतिषिध्य

1 'ख' 'घ' 'च' पु.पा. रूढम् ।
2 'क' 'घ' ताळा पु पा· अमृतत्वमेति
'घ' ताला.पु पा. महान्तम् ।
'घ' ताला पु.पा :— पुरुषसूक्तस्य नारायणैक निष्ठत्वेन

तज्ज्ञानस्य (तद्धानस्य ?) तदुपायत्वाभिधानाच्छिव एव परं तत्त्वं मुमुक्षुज्ञेयमिति निर्णयो न युज्यत इति वाच्यम्[1]। तस्य नारायणैकनिष्ठत्वे मानाभावात्। 'उतामृतत्वस्येशानः' इत्यनन्यसाधारणेशानाभिधानश्रुत्या, पुरुषसूक्तस्य शिवपरतया एव न्याय्यत्वाच्च॥ 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति तत्रोत्तरत्र श्रुत लक्ष्मीपतित्वलिङ्गस्य श्रुतितो दुर्बलत्वेन नारायणपरत्वासाधकत्वात्।

ननु नारायणोपनिषदन्तरे 'पुरुषो ह वै नारायणोऽकामयत, प्रजाः सृजेयेति, नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रो जायते' इति वाक्येन नारायणस्सर्वभूतनिदानहिरण्यगर्भोत्पत्यनन्तरं, रुद्रोत्पत्त्यवगमाद्रुद्रस्य कार्यकोटिनिविष्टत्वेनावगततया तदसम्भवात्। जगत्कारणं ब्रह्मरुद्ररूपमेवेत्यवधारणानुपपत्तिरिति चेन्न। अथर्वशिरसि— 'देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छन् को भवानिति। सोऽब्रवीत्[2]। अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त' इत्यादिना रुद्रस्य सर्गात् प्रथमसत्त्वावगमेन तदितरगतत्वावगमेन च नारायणोपनिषत्प्रतिपन्न नारायणकार्यभूत रुद्रस्य च सर्वकारणत्वेन सर्वात्मकत्वेन चावधारिताद्रुद्रादन्यत्वेन तथावधारणे बाधकाभावात्। अत एव श्वेताश्वतरीये 'यदा तमः' इति मन्त्रे सर्गादिसमये 'शिव एव केवलः' इति शिवेतरसत्त्वं प्रतिषिध्य शिवसत्त्वावेदनमुपपद्यते। अन्यथा केवलेति केवलशब्दवैयर्थ्यापत्तेः। किञ्च परशिवस्य नारायणकार्यत्वेऽथर्वशिखायां— 'अथ हैनं पैप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाणमुवाच भगवन्किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं किन्तद्ध्यानम्? को वा ध्याता? कश्च ध्येयः? स एभ्योऽथर्वणः प्रत्युवाच' ॐ इत्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्य' मित्या-

1 'क', 'ख' पु पा: अनुमुच.

2 प. ता. पु पा: स एभ्योपर्वा. प्रत्युवाच।

